Sunday, Piano, Nursery Rhymes
It's Morton for me all the time



# MORTON
SWEETS





I Love my Sundays ..... Nursery Rhymes and my Mummy close to me and Mortons
all the time. It has been our Family's favourite for years and years,
Delicious and yummy in so many flavours. All with the goodness of
Creamy Milk, Glucose and Sugar.
Chocolate and Coconut Cookies, Rose Eclairs, Supreme
Chocolate and Coconut Toffees, Lacto Bonbons Mango King
and so many other delicious treats.
Um m m m m Every bite a yummy delight.



A lifetime of real goodness

MORTON CONFECTIONERY &
MILK PRODUCTS FACTORY
P.O. : Marhowrah 841 418 Dist. : Saran, Bihar

# THE BEST CARE FOR YOUR HAIR

# ASWINI HOMEO HAIR OIL

The premium Hair Oil that has been traditionally prepared from the purest coconut oil and the most effective Homoeo Hair Care Medications, for the ultimate protection and care of your hair. Tested, tried and proven for efficacious action in providing relief from hair problems for thousands of users all over A.P., **Aswini Homoeo Hair Oil** now commands winning markets in Tamil Nadu, Pondicherry and Karnataka also.




- **Stops falling of hair.**
- **Prevents premature greying.**
- **Helps rich growth.**
- **Provides cooling effect to the brain.**
- **Non-Sticky.**

ANJU ADS

**For the Best Results**

Use Aswini Homoeo Hair Oil daily and wash hair with Shikakai or Rita Soap Nuts only - *once in three days.*

## ASWINI HOMEO & AYURVEDIC PRODUCTS LTD.

**Moosapet, Hyderabad - 500 018. India**
**Phone : 273430 & 273607. Fax : 040-272409**



यही है
प्राइम की
विजेता
रेखा.
PRIME LEADER
PRIME SERIES
MATHEMATICAL DRAWING INSTRUMENTS
PRIME RANK
PRIME MERIT
आ गए, उत्कृष्ट
बॉक्स. यह अचूक कामगिरी, संपूर्ण नियंत्रण एवं उत्कृष्ट कार्यकुशलता के लिए खास तौर पर तैयार किए गए हैं.
तो दीजिए अपने नन्हें-मुन्नें को प्राइम. जिसके सहारे वो चढ़ता जाए कामयाबी की सीढ़ियां, और बने विजेता.
प्राइम मेरिट
प्राइम रैंक
प्राइम जीनियस
प्राइम लीडर
◄ मैथमेटिकल ड्रॉइंग इन्स्ट्रुमेंट्स ►
PIDILITE PRODUCTS



# चन्दमामा

अक्टोबर् - १९९५

*

## अ न्त र ङ्ग म्



*


प्रतिकृतिमूल्यं रू. ५.००

वार्षिकं ग्राहकशुल्कं रू. ६०.००

# चन्दमामा




संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'



## सहनशीलता

चीनादेशीयाः प्रत्येकं नूतनवर्षम् अपि नूतनेन नाम्ना निर्दिशन्ति । यथा - शुनकानां वर्षम् । अस्माकं देशे तमिळुदिनदर्शिन्याः अनुसारं प्रतिवर्षम् अपि नूतनं किञ्चन नाम प्राप्नोति । एतत् वर्षं 'युववर्षम्' इति उक्तम् अस्ति । एतस्य नाम्नः श्रवणात् अस्माकं मनसि 'शिशुवर्षम्' इति नाम्नः स्मरणं भवति । विश्वसंस्थया प्रतिवर्षम् अपि किञ्चन नाम दीयते । तदनुसारं १९७९ तमवर्षस्य 'शिशुवर्षम्' इति नाम दत्तम् आसीत् विश्वसंस्थया । गतवर्षं 'कुटुम्बवर्षम्' आसीत् । १९९५ तमं वर्षं 'सहिष्णुतावर्षम्' ।

विश्वसंस्थया १९७९ तमे वर्षे सर्वे सदस्यराष्ट्राणि सूचितानि आसन् यत् बालानां हितदृष्ट्या कार्यक्रमाः आयोजनीयाः इति । एतेषु वर्षेषु 'बालानाम् अधिकारः' इति नाम्ना विश्वसंस्था बालानां विश्वसम्मेलनम् आयोजितवती आसीत् । १९९४ तमवर्षं कुटुम्बवर्षम् इति नाम्ना निर्दिशन्ती विश्वसंस्था कुटुम्बबन्धनविषये जनान् अबोधयत् । परस्परं प्रीत्या, व्यवहारेण, गौरवदानेन, विश्वासपूर्णव्यवहारेण च कुटुम्बसदस्यानाम् अभिप्रायः समानः भवति इत्यपि विश्वसंस्थया उक्तम् आसीत् ।

भगवद्गीतायाम् उक्तम् अस्ति -

समः शत्रौ च मित्रे च तथा मानापमानयोः ।<br>
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ।। इति ।

एषा एव सहिष्णुता नाम । एतया युक्ताः एव सहनाशीलाः । 'एतेषां व्यवहाराः आदर्शप्रायाः' इति गीतायाम् उक्तम् अस्ति ।

यदा परस्परं विरोधाभिप्रायाः भवन्ति, तदा अन्येषां समस्यां स्वसमस्यां मत्वा इतरदृष्ट्या समस्याविश्लेषणं करणीयम् । तदा वैयक्तिककारणतः कोऽपि अभिप्रायः अङ्गीकरणीयः न भवति । सहनाशीलस्वभावः यदि अस्ति, तर्हि अन्येषाम् उत्तमविचाराणाम् अङ्गीकरणे अपि क्लेशः न भवति ।



कदाचित् गान्धिमहाशयः उक्तवान् - 'अहं सर्वान् अपि धर्मान् समानभावनया पश्यामि । यतः सर्वे अपि धर्माः समानसत्यं प्रतिपादयन्ति' इति । मानवस्य सर्वेषु व्यवहारेषु धार्मिकसहिष्णुता अत्यन्तं प्रमुखम् अस्ति । वर्षेऽस्मिन् प्रपञ्चे सर्वत्र गान्धिवर्यस्य १२५ तमजन्मदिनस्य आचरणं क्रियमाणम् अस्ति । एतादृशे विशिष्टे सन्दर्भे १९९५ तमे वर्षे विश्वसंस्थया एषा सहिष्णुता अस्य वर्षस्य उद्देशः इति घोषितः अस्ति यत्, तत् सन्तोषदायकः विषयः खलु ।

सम्पुटः - १२ अक्टोबर् - १९९५ सञ्चिका - ७

प्रतिकृतिमूल्यं रू. ५.०० * वार्षिकं ग्राहकशुल्कं रू. ६०.००



**वार्ताविशेषः -**

# गगनाङ्गणे करमेलनम्

अन्तरिक्षे सोवियत्रष्यादेशेन निर्मितेन 'मीर्' नामकेन अन्तरिक्षनिस्स्थानके अमेरिकादेशेन प्रेषितं अन्तरिक्षयानम् 'अट्लाण्टिस्' जून् २९ दिनाङ्के मिलितम् अभवत् । एतादृशी घटना गतेभ्यः विंशतिवर्षेभ्यः अनन्तरम् इदं द्वितीयवारं प्रवृत्ता । १९७५ तमवर्षस्य जुलैमासे अमेरिकादेशस्य अपोलोनामिका व्योमनौका सोयजनामिकया-सोवियत् व्योमनौकया मिलिता आसीत् । तस्मिन् समये द्वयोः देशयोः मध्ये आन्तरिकयुद्धं प्रचलति स्म । अतः एषा संघटना केनापि प्रकारेण राजकीयप्रामुख्यं प्राप्तुम् अशक्ता जाता । किन्तु तादृशं मेलनम् आवश्यकं साङ्केतिकपरिज्ञानं वर्धयितुं कारणीभूतं जातम् । सोवियत् यूनियन् यदा अस्तं गतम् अभवत्, तदा अमेरिकारष्यादेशयोः यः द्वेषः आसीत्, सः निवारितः अभवत् । उभौ अपि देशौ स्नेहेन करमेलनं कृतवन्तौ । परिणामतः इदानीम् अन्तरिक्षे १५ देशानां मेलनार्थं अन्ताराष्ट्रियनिस्स्थानकस्य निर्माणद्वारा विविधानां योजनानां व्यवहारे आनयनार्थं प्रयत्नाः क्रियमाणाः सन्ति । सप्तभिः व्योमगामिभिः सह अट्लाण्टिस् अमेरिकातः जून्मासस्य २७ तमे दिनाङ्के प्रस्थितम् । दिनद्वयं यावत् तत् 'मीर्' स्थानकं परितः भ्रमणम् अकरोत् । अनन्तरम् एव तेन सह मिलितम् अभवत् । जून् २९ तमे दिनाङ्के उभयोः अपि मेलनं जातम् इत्यतः महती काचित् व्योमनौका आकाशे स्थिता इव दृश्यते स्म । हौस्टन्तः, कालिनिनग्राडतः तन्नाम भूमितः 'मीर्' प्रवेशः करणीयः इति व्योमगामिभ्यः सङ्केतप्रेषणार्थं घण्टाद्वयस्य कालावकाशः आवश्यकः अभवत् । अनन्तरं व्योमगामिनः परस्परं करमेलनम् आलिङ्गनं च कृतवन्तः ।

मध्य-आस्ट्रियादेशे रष्या-मङ्गोलियासीमा-रेखायाः उपरि अन्तरिक्षे सामान्यतः २४ मैल् दूरे विना विघ्नं द्वयोः मेलनं जातम् । तत्काले उभौ अपि प्रतिसेकेण्ड् ५ मैल्वेगेन भ्रमतः स्म । १२२ पादपरिमितदैर्घ्ययुतम् अट्लाण्टिस् ११२ पादपरिमितेन दैर्घ्ययुतेन मीर्स्थानकेन यदा मिलितम् अभवत्, तदा अमेरिकादेशीयः कमाण्डर् केप्टन् गिब्सन् अतीव सन्तोषं प्रकटीकृतवान् ।

अनन्तरं पञ्च दिनानि यावत् मीर्स्थानकस्य अन्तः विविधाः प्रयोगाः प्रवृत्ताः । अनन्तरं मीर्वासिना नार्मन्थागार्डवर्येण सह अन्ये त्रयः व्योमगामिनः प्रतिप्रयाणार्थम् अट्लाण्टिस् प्राप्तवन्तः । तैः पूर्वं यत्र स्थितम् आसीत् तत् स्थलं प्रति अट्लाण्टिस्व्योमगामिनः गतवन्तः । अनन्तरम् उभौ मीर्तः बहिः आगत्य 'सोयेज्' नामके भागे तिष्ठन्तौ अन्तरिक्षनौका-मीर्स्थानकयोः वियोजनदृश्यस्य चित्रीकरणं कृतवन्तौ । यदा तौ मीर्स्थानकं प्रविशन्तौ आस्तां तदा अट्लाण्टिस्नौकायां स्थिताः जनाः तयोः भावचित्रं स्वीकृतवन्तौ ।

अट्लाण्टिस् ततः प्रस्थाय जुलैमासस्य ७ दिनाङ्के भूमिं प्राप्नोत् । ऐतिहासिकात्मिकाम् एतां घटनां दूरदर्शने दृष्ट्वा अमेरिकादेशस्य अध्यक्षः बिल्क्लिण्टन्वर्यः उक्तवान् - ''दृष्टं खलु भवद्भिः ! इतःपरं उभयोः देशयोः मध्ये कापि स्पर्धा न भविष्यति'' इति ।





# साहसिनः पराजयः

कस्मिंश्चित् गहने अरण्यप्रदेशे केचन किरातजातीयाः वसन्ति स्म । सिंहबलः नाम वीरः तेषां नायकः आसीत् । तस्य नेतृत्वे सर्वे किराताः विनाक्लेशं सन्तोषेण सहजीवनं कुर्वन्ति स्म ।

कानिचन दिनानि अतीतानि । सिंहबलः वृद्धः जातः । यः यौवने निश्शस्त्रः सन् व्याघ्रं सम्मुखीकृत्य केवलमुष्टिप्रहारेण एव मारयति स्म, सः इदानीं दण्डस्य साहाय्येन विना चलितुं न शक्नोति स्म । यः आदिनं महता परिश्रमेण कार्यं कृत्वा अपि उत्साहमूर्तिः इव व्यवहरति स्म, सः इदानीम् अल्पं दूरं क्रमितुम् अपि कष्टम् अनुभवति स्म । यः पूर्वं निरायुधतया व्याघ्रसिंहादीन् मारयति स्म तस्यैव हस्ताः इदानीं कम्पनकारणतः बाणप्रयोगे अपि असमर्थाः आसन् । 'वार्धक्यकारणतः शरीरशक्तिः क्षीणतां गच्छति । वार्धक्यदशायाम् अपि नायकपदे स्थितिः न शोभते' इति चिन्तितवान् सः । अतः किरातानां नायकत्वम् अन्यस्मै समर्थाय समर्पणीयम् इति सः निर्णीतवान् ।

वस्तुतः किरातजातौ बलवत्तमः एव नायकः भवेत् इति नियमः । अतः यः कोऽपि नायकपदव्यर्थं स्पर्धितुं शक्नोति स्म । किन्तु सिंहबलस्य विषये सर्वेषां पूज्यभावः आसीत् इति कारणेन केऽपि नायकपदव्यर्थं न स्पर्धितवन्तः ।

सिंहबलस्य पुत्रः न आसीत् । एका एव पुत्री । तस्याः नाम मल्लिका । सा अत्यन्तं सुन्दरी आसीत् । नायकस्य यदि पुत्रः न स्यात् तर्हि तस्य पुत्री भाविनं नायकं वृणुयात् इति तेषां सम्प्रदायः ।

नायकचयनार्थं कठिना स्पर्धा भवति स्म । स्पर्धा कष्टकरी इति ज्ञात्वा अपि बहवः युवकाः 'मल्लिका प्राप्तव्या' इति स्वप्नं

'अनामिका'

पश्यन्तः आसन्।

तादृशेषु युवकेषु अन्यतमः कर्णशृङ्गः। सः अतीव सुन्दरः बलवान् च। मल्लिकायाः अपि तस्मिन् महती प्रीतिः। तौ तदा तदा एकान्ते मिलित्वा सम्भाषणं कुरुतः स्म।

एकं शुभं दिनं निश्चित्य सिंहबलः उद्घोषणं कृतवान् - "नायकपदव्यर्थं स्पर्धाः भविष्यन्ति। यः स्पर्धायां जेष्यति, तेन सह मल्लिकायाः विवाहः भविष्यति" इति।



विषयं ज्ञात्वा कर्णशृङ्गः मल्लिकां लब्धवान् इव नितरां सन्तुष्टः। स्वशक्तिविषये महान् विश्वासः अभिमानश्च आसीत् तस्य। अतः अन्यान् सर्वान् पराजितान् करोमि इति सः भावितवान्।

किन्तु तत्र एव शिखिमुखः नाम अन्यः कश्चित् युवकः आसीत्। तस्य पिता न आसीत्। केवलं माता चामुण्डिका आसीत्। तस्याः पतिः बलभद्रः महान् शक्तिशाली आसीत्।

यदा सिंहबलः नूतनतया नायकः अभवत् तदा सः मदेन उक्तवान् आसीत् यत् - मां जेतुं कः समर्थः इति। अत्रान्तरे तेन बलभद्रस्य सामर्थ्यं ज्ञातम्। तदा सः- 'बलभद्रः ममापेक्षया बलवान् अस्ति। अतः सः मां पराजित्य नायकः भवेत्' इति भीत्या तेन सह वैरं कृत्वा रहस्यतया तं मारितवान् आसीत्। एतत् ज्ञात्वा चामुण्डिका सिंहबलं रहसि मिलित्वा - "भोः सिंहबल! मम पतिः नायकपदवीं प्राप्नुयात् इति द्वेषेण भवान् तं मारितवान् खलु! तथापि मम पुत्रः शिखिमुखः अग्रे एकस्मिन् दिने नायकः भविष्यत्येव। एषा मम प्रतिज्ञा" इति उक्तवती।

तदा सिंहबलः दर्पेण व्यवहरन् - "तथा स्वप्ने अपि नैव भविष्यति। अन्यस्य कस्यापि साहाय्यं विना असहायायाः निर्गतिकायाः भवत्याः पुत्रः कथं नायकः भविष्यति इति अहम् अपि द्रक्ष्यामि" इति तिरस्कारपूर्वकम् उक्तवान् आसीत्।

गच्छति काले सिंहबलः चामुण्डिकायाः विषयम् एव विस्मृतवान्। किन्तु चामुण्डिका स्वपतिं क्रूरतया मारितवन्तं सिंहबलं न विस्मृतवती। सा स्वपुत्रं शिखिमुखं समर्थं कर्तुं बहुधा प्रयत्नं कृतवती। तस्याः



निरन्तरपरिश्रमस्य फलेन शिखिमुखः, खड्गविद्यायां, मल्लविद्यायां, तरणे, धनुर्विद्यायां च प्रवीणः सञ्जातः। परन्तु 'अहं प्रवीणः, महान् वीरः' इति भावं सः कदापि अन्येषां पुरतः न प्रदर्शितवान्। सिंहबलः यदि शिखिमुखं सर्वविद्याप्रवीणं जानीयात् तर्हि तं मारयेत् इति भीत्या चामुण्डिका अपि जागरूका आसीत्। सर्वे किराताः मिलित्वा 'अङ्कालम्मा'नामिकां देवीं प्रतिवर्षं पूजयन्ति स्म। तस्मिन् उत्सवदिने एव नायकस्य चयनं करणीयम् इति कृत्वा तस्मात् पूर्वदिने एव स्पर्धाः आयोजिताः आसन् सिंहबलेन।

तत्र त्रिविधाः स्पर्धाः आसन्। प्रथमा शारीरकी स्पर्धा मल्लयुद्धद्वारा। द्वितीया धैर्यसम्बद्धा। तदा खड्गं गृहीत्वा व्याघ्रेण सह युद्धं करणीयम्। अन्तिमा धनुर्विद्यानैपुण्यसम्बद्धा। तस्यां स्पर्धायां देव्याः अङ्कालम्मायाः पुरतः स्थालिकासु हरिद्रा कुङ्कुमं च स्थाप्यते। स्थालिकाः अपातयित्वा केवलं हरिद्रा कुङ्कुमं च देव्याः विग्रहस्य उपरि यथा पतेत् तथा बाणप्रयोगः करणीयः।

स्पर्धार्थम् आगतान् गणद्वये विभक्तवान् सिंहबलः। प्रथमं मल्लयुद्धस्पर्धा प्रवृत्ता। प्रथमगणे कर्णशृङ्गः, द्वितीयगणे शिखिमुखः च चितौ।

द्वितीयस्पर्धायां कर्णशृङ्गः शिखिमुखः च खड्गं गृहीत्वा व्याघ्रेण सह युद्धं कर्तुं पञ्जरं प्रविष्टवन्तौ। यद्यपि द्वौ अपि व्रणितौ तथापि द्वौ मिलित्वा व्याघ्रं मारितवन्तौ।

तृतीया स्पर्धा अङ्कालम्मायाः उत्सवदिने एव प्रचलिष्यति इति सिंहबलः उद्घुष्टवान्। सर्वे ततः प्रतिगतवन्तः।

व्याघ्रेण सह युद्धस्य अनन्तरं कर्णशृङ्गः शिखिमुखस्य पूर्वापरविचारान् सङ्गृहीतवान्। तदा सः ज्ञातवान् यत् शिखिमुखः पराक्रमी इति। धनुर्विद्यायां कर्णशृङ्गः तावत् प्रवीणः न आसीत्। अतः पराजयस्य सम्भवः आसीत् एव।

यदि शिखिमुखः जयति तर्हि नायकपदव्या सह स्वस्य प्रियतमा मल्लिका अपि तदीया भविष्यति इति भयात् कर्णशृङ्गः तस्यां रात्रौ एव मल्लिकया मिलित्वा - "धनुर्विद्यायां नितरां निपुणं शिखिमुखं जेतुं शक्नोमि इति मम विश्वासः

नास्ति'' इति उक्तवान् ।

''भवान् अपि धनुर्विद्यायां निपुणः एव खलु ?'' इति पृष्टवती मल्लिका ।

तदा कर्णशृङ्गः उक्तवान् - ''धनुर्विद्यायां मम सामान्यं नैपुण्यम् अस्ति इत्येतत् सत्यम् एव चेदपि शिखिमुखं जेतुं यत् नैपुण्यम् आवश्यकं तत् सर्वथा नास्ति मम । स्पर्धायां यः जेष्यति सः एव भवतीं परिणेतुम् अर्हति, न अन्यः'' इति ।



एतत् श्रुत्वा मल्लिका अश्रूणि स्रावयन्ती - ''यदि भवता सह मम विवाहः न स्यात् तर्हि अहम् आत्महत्यां वा करोमि । अन्यं तु सर्वथा न वृणोमि'' इति उक्तवती ।

पश्चात् तौ द्वौ अपि सम्यक् आलोच्य तस्यां रात्रौ एव शिखिमुखेन मिलितवन्तौ । कर्णशृङ्गः मल्लिकाविषयकं स्वस्य अनुरागं शिखिमुखं निवेद्य प्रार्थितवान् यत् आवयोः विवाहः यथा भवेत् तथा करोतु इति ।

मल्लिका अपि तस्य पादयोः पतित्वा - ''हे भ्रातः ! मम इच्छां पूरयतु'' इति गद्गदस्वरेण प्रार्थितवती ।

तदा शिखिमुखः उक्तवान् - ''भवन्तौ मम कठिनां परीक्षां कुर्वन्तौ स्तः । यतः अस्यां स्पर्धायाम् अहं जयेयम् इत्येव मम, मम मातुः च आशा । भवतु कर्णशृङ्ग, मम एकस्य प्रश्नस्य भवान् सत्यम् उत्तरं ददातु । नायकपदं, मल्लिका इति एतयोः यदि एकं भवता चेतव्यम् तर्हि भवान् किं चिनोति ?'' इति पृष्टवान् ।

अनुक्षणं कर्णशृङ्गः उक्तवान् - ''नायकपदं मम तृणसमानम्, अहं पूर्णमनसा मम प्रियतमां मल्लिकाम् एव चिनोमि'' इति ।

''तर्हि भवतु'' इति उक्त्वा मल्लिकां सम्प्रेष्य अनन्तरदिने तेन कथं स्पर्धायां जयः प्राप्तव्यः इति धनुर्विद्यासम्बद्धान् कांश्चन सूक्ष्मान् अंशान् तं बोधितवान् ।

कर्णशृङ्गः अपि - ''भवादृशेन मम गुरुणा भाव्यम् आसीत् । मम तादृशं भाग्यं नास्ति'' इति उक्त्वा शिखिमुखाय कृतज्ञतां समर्प्य ततः गतवान् ।

अनन्तरदिने सर्वे जनाः कुतूहलेन स्पर्धां द्रष्टुम् अङ्कालम्मायाः देवालये सम्मिलितवन्तः । प्रथमं शिखिमुखः बाणप्रयोगं कृतवान् । तस्मात्

हरिद्राकुङ्कुमस्थालिका किञ्चिदिव अग्रे गता, तावदेव । पश्चात् कर्णशृङ्गः स्थालिकाम् अचालयित्वा केवलं हरिद्राकुङ्कुमं च देव्याः उपरि पातितवान् ।

सर्वे किराताः सन्तोषं प्रकटितवन्तः । तदा सिंहबलः कर्णशृङ्गम् अलङ्कृते नायकपीठे उपावेश्य स्वपुत्र्याः विवाहं तेन सह करितवान् ।

यद्यपि शिखिमुखः पराजितः, तथापि तस्य शौर्यं पराक्रमं च दृष्ट्वा सिंहबलः चकितः । पश्चात् सर्वान् विचार्य 'शिखिमुखः चामुण्डिकायाः पुत्रः' इति ज्ञात्वा इतोऽपि चकितः ।

तदा सः चामुण्डिकाम् आहूय - ''भवती तदानीन्तनं सम्भाषणं स्मरति किम् ? भवत्याः पुत्रः नायकः न भविष्यति इति अहम् उक्तवान् आसं खलु । तथैव जातम् । भवत्याः प्रतिज्ञायाः का गतिः ?'' इति उपहासपूर्वकं पृष्टवान् ।

तदा चामुण्डिका - ''मम प्रतिज्ञा पूर्णा, सिंहबल ! तदा तु भवान् मदान्धः आसीत्, अधुना तु किं प्रचलदस्ति इति ज्ञातुम् अशक्तः अन्धः जातः अस्ति'' इति उक्त्वा ततः निर्गतवती ।

तस्याः उत्तरं श्रुत्वा भ्रान्तः सिंहबलः पुत्रीम् आहूतवान् । मल्लिका प्रवृत्तं सर्वं पितरं निवेदितवती । तत् श्रुत्वा - ''विचित्रम् इदम् । कथं स्पर्धायां पराक्रमिणः एव पराजयः नाम !'' इति आश्चर्येण उक्तवान् सिंहबलः ।

पश्चात् मासे आतीते शिखिमुखः कर्णशृङ्गेण सह मल्लयुद्धं कृत्वा तं जितवान् । तेषां जातिनियमानुसारम् आत्मानं जितवते शिखिमुखाय नामकपदं समर्पितवान् कर्णशृङ्गः ।

सिंहबलः शिखिमुखम् आलिङ्ग्य ''भवतः त्यागः अपूर्वः । यद्यपि भवान् मदपेक्षया बहु कनीयान्, तथापि भवन्तम् अहं शिरः अवनमय्य नमस्करोमि'' इति उक्तवान् ।

एतत् दृश्यं दृष्ट्वा शिखिमुखस्य माता अपि अभिमानेन आनन्दाश्रूणि स्रावितवती ।





# उपनेत्रदानम्

श्रीपुरनामके ग्रामे श्रीनाथनामकः कश्चित् कृषिकः आसीत् । सः प्रतिदिनं सायङ्कालसमये ईश्वरस्य आलयं गच्छति स्म । प्रतिदिनं सायङ्काले देवालयस्य वितर्द्यां ग्रामजनाः सर्वे उपविश्य जल्पन्ति स्म । श्रीनाथः तेषां सम्भाषणं शृणोति स्म । कदाचित् सः मध्ये प्रविश्य यत्किमपि वदति चेत् सर्वे तम् उपहसन्ति स्म । तदा म्लानवदनः श्रीनाथः प्रत्युत्तरं किमपि अदत्त्वा मौनं ततः उत्थाय गच्छति स्म । किन्तु अन्येषाम् उपहासं प्राप्य अपि श्रीनाथः प्रतिदिनम् ईश्वरस्य आलयं गच्छति स्म एव । एवं सति कदाचित् आलयस्य वितर्देः समीपम् आगच्छन्तं शिवरुद्रनामकं ज्येष्ठं पुरुषं दृष्ट्वा तत्र सम्मिलितेषु कश्चित् पृष्टवान् – ''वैद्यदर्शनार्थं नगरं गन्तव्यम् इति वदन् आसीत् खलु भवान् ! गत्वा आगतं वा ?'' इति ।

तदा शिवरुद्रः स्वकोषात् एकम् उपनेत्रं निष्कास्य सर्वान् प्रदर्शयन् उक्तवान् – ''आम् ! नगरं गत्वा आगतं मया । एतत् उपनेत्रं नेत्रवैद्येन दत्तम् । सः वैद्यः सामान्यः न । एतस्य उपनेत्रस्य धरणानन्तरम् अहं सर्वमपि पठितुं समर्थः अस्मि'' इति ।

''उत्तमम् उपनेत्रं यदि स्यात्, तर्हि पठने कः क्लेशः ?'' इति उक्तवान् अपरः ।

''मया अपि नेत्रवैद्यः द्रष्टव्यः । अहम् अपि एतेषु दिनेषु किमपि पठितुं न शक्नोमि'' इति उक्तवान् अन्यः ।

एतस्य सम्भाषणस्य श्रवणेन श्रीनाथस्य आश्चर्यं सन्तोषः च अभवत् । सः अनन्तरदिने एव नगरं गत्वा नेत्रवैद्यम् अन्विष्यन् – ''अस्माकं ग्रामीणस्य रामनाथस्य द्वितीयपुत्राय शिवरुद्राय उपनेत्रं दत्तवान् वैद्यः कुत्र अस्ति ? भवन्तः जानन्ति वा ?'' इति बहून् जनान् पृष्टवान् ।

सर्वेऽपि 'वयं न जानीमः' इति

उक्तवन्तः । अन्ते एकः तम् आशिखं दृष्ट्वा - "भोः, अत्रत्यः कोऽपि भवतः ग्रामं ग्रामस्थं शिवरुद्रं वा न जानाति । अतः तं विषयं त्यजतु । तत्र कश्चन लघुमार्गः दृश्यते खलु ! तेन मार्गेण गच्छतु । तत्र सोमसुन्दरनामकः प्रसिद्धः नेत्रवैद्यः कश्चित् वसति । दैवसाहाय्यं यदि स्यात्, तर्हि अन्धाय अपि उपनेत्रं ददाति सः" इति उक्तवान् ।

श्रीनाथः वैद्यस्य सोमसुन्दरस्य समीपं गतवान् । सः वैद्यं स्वपरिचयम् उक्त्वा - "स्वामिन् ! अस्माकं ग्रामस्य शिवरुद्राय उपनेत्रं दत्तवान् भवान् एव खलु ? सः इदानीं सर्वमपि पठितुं शक्नोति" इति उक्तवान् ।

नेत्रवैद्यः क्षणं यावत् चिन्तयित्वा - "ग्रामः कः इति न स्मरामि अहम् । किन्तु शिवरुद्रनामकाय पुरुषाय उपनेत्रम् अहम् एव दत्तवान्" इति उक्तवान् ।

तस्य वचनं श्रुत्वा श्रीनाथः उक्तवान् - "स्वामिन् ! शिवरुद्राय भवता यादृशम् उपनेत्रं दत्तं, तादृशम् एव मह्यम् अपि ददातु कृपया" इति ।

नेत्रवैद्यः श्रीनाथम् एकस्मिन् आसन्दे उपवेश्य जम्बीरफलगात्राणि सर्षपगात्राणि च अक्षराणि प्रदर्शयन् - "किं दृश्यते ? पठतु" इति उक्तवान् । श्रीनाथः वैद्येन दर्शितानि अक्षराणि पश्यन् उक्तवान् - "अहं किमपि पठितुं न शक्नोमि" इति ।

वैद्यः तेन विविधानि उपनेत्राणि धारितवान् । किन्तु उपनेत्रधरणानन्तरम् अपि 'अहं पठितुं न शक्नोमि' इत्येव उक्तवान् श्रीनाथः ।

एतस्मात् श्रान्तः वैद्यः - "भवतः नेत्रे कीदृशः दोषः अस्ति इत्येव न ज्ञायते मया" इति उक्तवान् श्रीनाथः ।

तदा श्रीनाथः - "अहं पठनं न जानामि । तथापि सर्वाणि पुस्तकानि पठनीयानि इति मम इच्छा । अस्मद्ग्रामीणः शिवरुद्रः भवता दत्तेन उपनेत्रेण सर्वं पठितुं शक्नोमि इति उक्तवान् । मह्यमपि तादृशम् एव उपनेत्रं ददाति भवान् इति मत्वा अहं भवतः समीपम् आगतवान्" इति उक्तवान् ।

एतत् श्रुत्वा वैद्यः आश्चर्येण स्तब्धः ।






(ट्राय्नगरस्य पतनानन्तरं रूपधरः अनुचरैः सह स्वदेशं प्रति प्रस्थितः । किन्तु मध्येमार्गं चण्डमारुतकारणात् महत् कष्टम् अनुभवन्तः ते कञ्चित् द्वीपं प्राप्तवन्तः । तस्य द्वीपस्य जनाः कीदृशाः इति ज्ञातुम् इच्छन् रूपधरः द्वादशभिः अनुचरैः सह गत्वा काञ्चित् गुहां प्रविष्टवान् । सा गुहा भाललोचनजातीयस्य राक्षसस्य आसीत् । अनन्तरम् ...)

राक्षसस्य ध्वनिश्रवणात् क्षणकालं यावत् ग्रीक्जनानां हृदयस्तम्भनं जातम् इव । तथापि रूपधरः आत्मानं निगृह्य राक्षसम् उद्दिश्य उक्तवान् - "राक्षसोत्तम ! ग्रीक्देशीयाः वयं ट्राय्नगरतः स्वदेशं प्रति गच्छन्तः स्मः । दौर्भाग्यवशात् समुद्रे प्रयाणसमये चण्डमारुतः उत्पन्नः । तस्मात् अस्माकं नौकाः मार्गभ्रष्टाः अभवन् । मार्गभ्रष्टाः वयम् अत्र आगताः स्मः । राराजनामकः अस्माकं राजा जगद्विख्यातः पुरुषः । सः बहून् देशान् आक्रमणपूर्वकं स्वाधीनीकृतवान् अस्ति । ट्राय्नगरं भस्मसात् कृतवान् अस्ति । इदानीं वयं भवतः अतिथयः । अतिथयः देवसमानाः इति ज्येष्ठाः वदन्ति । अतः योग्यरीत्या अस्माकं सत्कारं कृत्वा कष्टात् वयं रक्षणीयाः भवता इति अस्माकं निवेदनम्" इति ।

एतत् वचनं श्रुत्वा राक्षसः अट्टहासं कुर्वन् उक्तवान् - "रे मन्दबुद्धे ! देवतानां विषये अपि गौरवं नास्ति अस्माकम् । एवं सति



अनन्तरं मृतशरीरं पक्त्वा तत् समग्रं खादितवान् च । एतत् प्रत्यक्षं दृष्टवतां रूपधरस्य तदनुचराणां च शरीरे भयात् स्वेदः उत्पन्नः । कम्पनं च आरब्धम् । भाललोचनः पक्वं मांसं खादित्वा पञ्चघटपरिमितं क्षीरं पीत्वा मेषाणां मध्ये उन्मुखं शयनं कृत्वा घोरिकाम् आरब्धवान् ।

रूपधरः कोषात् खड्गं निष्कास्य हस्तेन गृहीत्वा स्थितवान् । तं राक्षसं हृदयस्थाने खड्गेन घातयित्वा एकेन प्रहारेण एव मारयितुम् इष्टवान् रूपधरः । किन्तु तावता तस्य मनसि कश्चन विचारः स्फुरितः । 'गुहायाः अवरोधपूर्वकं राक्षसेन या महती शिला स्थापिता आसीत्, सा मया वा अनुचरैः वा कम्पयितुम् अपि न शक्यते । यदि इदानीम् अहं राक्षसं मारयिष्यामि, तर्हि अहं मम अनुचरैः सह अस्याम् एव गुहायां निराहारं मरणं प्राप्स्यामि । केऽपि अस्मान् रक्षितुं न शक्ष्यन्ति' इति विचिन्त्य रूपधरः खड्गं स्वकोषे संस्थाप्य शयनं कृतवान् । तस्यां रात्रौ तेन निद्रा एव न प्राप्ता ।

प्रातःकालः जातः । राक्षसः उत्थाय अग्निं ज्वालितवान् । मेषीणाम् अजानां च दोहनं कृतवान् । अनन्तरम् उभौ ग्रीकजनौ मारयित्वा खादितवान् । अजान् मेषान् च गृहीत्वा गुहातः बहिः गतवान् च । गुहातः बहिर्गमनसमये ग्रीकजनाः ततः पलायनं यथा न कुर्युः तथा गुहायाः द्वारस्य अवरोधपूर्वकं महतीं शिलां संस्थाप्य गतवान् राक्षसः ।

मनुष्याणां भवतां सत्कारं कुर्मः किम् ? अस्मादृशान् भाललोचनान् सम्मुखीकर्तुं देवताः अपि असमर्थाः । भवतु । भवतां नौकाः कुत्र स्थगिताः सन्ति ? समीपे उत दूरे इति वदतु तावत्'' इति ।

राक्षसस्य एतस्मात् प्रश्नात् तस्य भावम् अवगतवान् रूपधरः । सः युक्त्या उक्तवान् - ''अस्माकं नौकानां का प्रसक्तिः इदानीम् ? भवतां प्रदेशस्य पर्वतस्पर्शेन अस्माकं नौकाः ध्वस्ताः अभवन् । तस्मिन् अपघाते अहं, मम एते अनुचराः च रक्षिताः अभवाम । अन्ये सर्वे मरणं प्राप्तवन्तः'' इति ।

अनन्तरं राक्षसः किमपि न उक्तवान् । सः स्वबाहू प्रसार्य रूपधरस्य उभौ अनुचरौ गृहीत्वा बलात् भूमेः घट्टनद्वारा मारितवान् ।

राक्षसः यदा बहिः गतवान्, तदा रूपधरः व्याघ्रपञ्जरे स्थितः मूषकः इव आतङ्केन इतस्ततः अटितवान्। केन प्रकारेण एषः राक्षसः मारणीयः इति बहुधा चिन्तयन् सः आत्मनः इष्टदेवतां बुद्धिमतीदेवीं भक्त्या प्रार्थितवान्।

बहुधा चिन्तनेन रूपधरस्य मनसि कश्चन उपायः स्फुरितः । तद्गुहायाः राक्षसः काष्ठमेकम् आनीय गुहायां स्थापितवान् आसीत् । तत् काष्ठम् इतोऽपि आर्द्रम् एव आसीत् । तत् नौकास्तम्भः इव उन्नतम् आसीत् । रूपधरः तेन बृहदाकारकं मानवनासिकाकारकं शूलं कृत्वा तस्याः अग्रभागं तीक्ष्णं कृत्वा तत् अग्नौ उष्णीकृत्य तीक्ष्णतरं कृतवान् । अनन्तरं तत् गुहायाः कोटरे रहस्येन स्थापितवान् । तस्यां रात्रौ राक्षसस्य निद्रासमये काष्ठशूलेन राक्षसस्य नेत्रे घातयित्वा सः अन्धः करणीयः इति रूपधरस्य चिन्तनम् । एतत् कार्यम् एकेन निर्वोढुं न शक्यते स्म । अतः एतत् कार्यं सम्पादयितुं सः अनुचरेषु चतुरः बलशालिनः चितवान्।

सूर्यास्तसमये राक्षसः मेषैः सह गुहां प्रत्यागतवान् । मेषीणाम् अजानां च दोहनं कृत्वा यथापूर्वं गुहायाः द्वारं पिहितवान् । उभौ ग्रीकजनौ मारयित्वा खादितवान् च । तावता रूपधरः चर्मस्यूतेन आनीतं पानीयं मृत्पात्रे संस्थाप्य राक्षससमीपम् आगत्य उक्तवान् - "भाललोचन ! भवान् एतस्य पानीयस्य रुचिं पश्यतु । भवान् मांसरुचिं



जानीयात् । किन्तु एतादृशस्य अपूर्वस्य पानीयस्य रुचिं न जानाति । एतत् विशिष्टं पानीयं भवदर्थम् एव आनीतं मया । किन्तु भवान् महान् दुष्टः । अस्मद्विषये करुणा एव नास्ति भवतः । आगतैः सह भवान् यदि एवमेव व्यवहरति, तर्हि भवतः दर्शनार्थं केऽपि न आगच्छन्ति खलु !" इति ।

राक्षसः रूपधरस्य वचनं न परिगणितवान् एव । अपि तु सः रूपधरेण दत्तं पानीयं पीतवान् । तत् पानीयम् अतीव रुचिकरम् आसीत् ।

अपूर्वस्य पानीयस्य पानेन सन्तुष्टः भाललोचनः रूपधरम् उद्दिश्य-"पानीयम् अस्ति चेत् इतोऽपि ददातु मह्यम् । अत्र वयं सदा द्राक्षारसं पिबामः । किन्तु एतादृशी



रुचिः तस्य नास्ति । भवतः नाम किम् ? अस्माकं सम्प्रदायानुसारं भवतः आतिथ्यं करिष्यामि अहम्'' इति उक्तवान् राक्षसः ।

राक्षसस्य एतादृशं वचनं श्रुत्वा अपि रूपधरः तस्मिन् न विश्वसितवान् । अपि तु सः राक्षसम् उक्तवान् - ''मम नाम विजयः इति । स्ववचनानुसारं भवता अहं सत्करणीयः'' इति ।

''विजय ! भवतः अनुचराणां मारणपर्यन्तं भवद्विषये न चिन्तयामि अहम् । अनुचराणां समाप्त्यनन्तरं भवन्तं खादिष्यामि । अस्माभिः अतिथिसत्कारः एवमेव क्रियते'' इति वदन् सः राक्षसः मूर्च्छां गतः इव शयनं कृतवान् ।

तदा रूपधरः रहस्येन स्थापितं काष्ठशूलम् आनीय, तत् अग्निज्वालया उष्णीकृत्य स्वानुचरान् धैर्यवचनानि उक्त्वा तान् प्रोत्साहितवान् । अनुचराणां साहाय्येन रूपधरः काष्ठं राक्षससमीपं नीत्वा उष्णीकृतेन काष्ठाग्रभागेन राक्षसस्य नेत्रे बलात् घातितवान् ।

अपरक्षणे एव राक्षसः उच्चैः क्रन्दनं कुर्वन् उत्थाय नेत्रे लग्नं काष्ठं निष्कास्य अन्यभाललोचनान् उच्चैः आहूतवान् । तस्य क्रन्दनेन गुहा प्रतिध्वनिता अभवत् ।

तस्मिन् एव प्रदेशे ये अन्ये भाललोचनराक्षसाः निवसन्ति स्म, ते एतस्य राक्षसस्य क्रन्दनं श्रुत्वा धावन्तः आगतवन्तः । ते गुहायाः बहिर्भागे एव स्थित्वा - ''किं जातं भवतः ? किमर्थम् उच्चैः क्रन्दनं कुर्वन् अस्माकं निद्राभङ्गं करोति भवान् ? अस्मिन् मध्यरात्रसमये केऽपि भवतः मेषान् नीतवन्तः किम् ? अथवा केनापि शक्त्या युक्त्या वा भवतः मारणं क्रियमाणम् अस्ति किम् ?'' इति पृष्टवन्तः ।

''आम् ! विजयनामकः कश्चित् मनुष्यः युक्त्या मां मारयन् अस्ति'' इति उक्तवान् गुहान्तर्गतः राक्षसः ।

''कश्चित् मनुष्यः राक्षसं भवन्तं मारयन् अस्ति इत्यस्य कः अर्थः ? कोलाहलं परित्यज्य तूष्णीं शयनं करोतु भवान् । प्रातःकालाभ्यन्तरे सर्वं सम्यक् भविष्यति'' इति उक्त्वा अन्ये भाललोचनाः ततः प्रतिगतवन्तः ।

अनन्तरं सः राक्षसः अन्धः इव हस्तौ

इतस्ततः प्रसारयन् गुहायाः द्वारसमीपं गत्वा शिलां पार्श्वे स्थापयित्वा रक्षणं कुर्वन् द्वारे एव उपविष्टवान् । यदि ग्रीकजनाः बहिः गन्तुम् इच्छन्ति, तर्हि ते ग्रहीतव्याः इति तस्य उद्देशः ।

किन्तु रूपधरः महान् बुद्धिमान् चतुरश्च । गुहातः बहिः गन्तुं बहून् मार्गान् पूर्वमेव सः अन्विष्य योजनां कृतवान् आसीत् । सः अग्रिमकार्यार्थम् उद्युक्तः ।

राक्षसेन पालिताः मेषाः स्थूलकायाः आसन् । तेषां रोमराशिः महती आसीत् । रूपधरः पङ्क्तौ मेषत्रयं बद्ध्वा मध्ये स्थितस्य मेषस्य उदरभागे स्वानुचरान् एकैकशः बद्धवान् । एकैकस्य अनुचरस्य निमित्तं मेषत्रयं बद्धवान् । अन्ते सः एकः एव अवशिष्टः । आत्मनः निमित्तं महामेषम् एकं गुहायाम् अवशेषितवान् आसीत् सः ।

प्रातःकालः जातः । मेषाः अजाः च चरणार्थं बहिः प्रस्थितवन्तः । गुहाद्वारे उपविश्य वेदनया सङ्कटम् अनुभवन् राक्षसः बहिः गच्छतां स्वमेषाणाम् अजानां च पृष्ठे हस्तेन आमर्शनं कृतवान् ।

स्वशत्रवः मेषाणाम् उदरभागस्य अधः सन्ति इति सः मूर्खः राक्षसः न जानाति । अनुचराः सर्वे यदा गुहातः निर्गताः, तदा रूपधरः आत्मनः निमित्तं रक्षितस्य महामेषस्य उदरभागे केशराशिं गृहीत्वा बहिः गतवान् । द्वारे उपविष्टः राक्षसः तस्य महामेषस्य पृष्ठं प्रीत्या आमृशन् – "प्रतिदिनं भवान् सर्वेषाम् अपेक्षया प्रथमं बहिः गच्छति स्म खलु ! अद्य अन्ते गच्छन् अस्ति । अलसः जातः भवान् । विजयनामकः दुष्टः मनुष्यः





वञ्चनया भवतः स्वामिनं माम् अन्धं कृतवान् इति कारणतः भवान् खिन्नः वा ? भवान् दुःखं मा करोतु । तं योग्यरीत्या दण्डयिष्यामि अहम्'' इति वदन् तं मेषं बहिः प्रेषितवान् ।

सः महामेषः गुहाम् अतिक्रम्य यदा किञ्चिद्दूरं गतवान्, तदा रूपधरः मेषस्य केशराशिं त्यक्त्वा उत्थितवान् । अन्येषां मेषाणाम् उदरभागे बद्धानां स्वानुचराणां बन्धनं निष्कासितवान् । एवं रूपधरस्य चातुर्येण सप्राणं बहिः आगताः ग्रीक्जनाः वेगेन धावन्तः समुद्रतीरे प्रतीक्षमाणानां नौकानां समीपं गत्वा तासु उपविष्टवन्तः ।

रूपधरः, तदीयाः अनुचराः च किमर्थं न प्रत्यागताः इति आतङ्केन प्रतीक्षमाणाः आसन् समुद्रतीरे नौकायाम् उपविष्टाः ग्रीक्वीराः । रूपधरसकाशात् प्रवृत्तं सर्वं ज्ञात्वा ते राक्षसेन मारितान् स्वस्नेहितान् स्मरन्तः दुःखेन उच्चस्वरेण रोदनम् आरब्धवन्तः । तदा रूपधरः तान् सान्त्वयन् - ''इदानीं दुःखकरणेन अपि मृताः न प्रत्यागच्छन्ति । अपि च एतावता एव महान् कालः अतीतः अस्ति । यावन्तः लभ्यन्ते, तावतः अजान् मेषान् च गृहीत्वा आगच्छन्तु । यावच्छीघ्रम् इतः निर्गच्छाम वयम्'' इति उक्तवान् ।

रूपधरस्य वचनं तदीयाः अनुचराः अङ्गीकृतवन्तः । अनन्तरं ते स्वनौकाः नुदन्तः एव समुद्रस्य मध्यभागपर्यन्तं गतवन्तः ।

नौकाः समुद्रतीरात् किञ्चित् अग्रे यदा गताः, तदा रूपधरः भाललोचनराक्षसस्य गुहायाः दिशि स्थित्वा उच्चध्वनिना एवम् उक्तवान् - ''रे ! दुर्विनीत ! भवतः दासत्वेन वयं तिष्ठामः इति भावितवान् आसीत् वा भवान् ? अतिथीन् मारयित्वा खादितवता भवता योग्यं दण्डनं प्राप्तम् अस्ति । इतःपरं वा विवेकेन व्यवहरन् जीवतु भवान्'' इति ।

रूपधरस्य एतत् वचनं श्रुत्वा राक्षसः कोपावेशेन एकां महतीं शिलां गृहीत्वा मृत्पिण्डम् इव कृत्वा यस्याः दिशातः रूपधरस्य स्वरः श्रुतः तस्यां दिशि क्षिप्तवान् । सा शिला रूपधरस्य नौकायाः अपेक्षया अपि किञ्चित् अग्रे गत्वा अपतत् । शिला यत्र पतिता, तत्र उत्पन्नः महान् तरङ्गः रूपधरस्य नौकायाः अभिमुखम् एव

वेगेन आगतः। एतस्मात् तस्य नौका पुनरपि समुद्र तीरदिशि गता । तदा रूपधरः त्वरया नौकादण्डं चालयन् पुनरपि समुद्रदिशि चालितवान् । स्वानुचरान् अपि सङ्केतेन एव सूचितवान् यत् - वेगेन नौकाः चालयन्तु इति।

ते समुद्रे बहुदूरं गतवन्तः। तदा रूपधरः पुनरपि राक्षसं कोपयितुम् उद्युक्तः । रूपधरस्य एतस्मात् व्यवहारात् तदीयाः अनुचराः स्वनायकम् उक्तवन्तः - "कृपया मौनं तिष्ठतु भवान् । कथमपि इतः निर्गच्छाम वयम्" इति । किन्तु रूपधरः अनुचराणां वचनं न लक्षितवान् एव। अपि तु सः महता उत्साहेन उच्चस्वरेण पुनः उक्तवान् - "हे राक्षसाधम! भवतः आन्ध्यस्य कारणीभूतः कः इति कोऽपि भवन्तं पृच्छति चेत् भवान् वदतु - 'रूपधरेण मम नेत्रं घातितम्' इति । सः रूपधरः ट्रायनगरस्य जेता, तदीयः देशः इथाका इति अवश्यं वदतु भवान्,येन मम पराक्रमः अपि सर्वैः ज्ञातः स्यात्" इति।

एतत् श्रुत्वा राक्षसः पुनरेकां महतीं शिलां बलात् क्षिप्तवान्। सा शिला रूपधरस्य समीपे एव पतिता। तस्मात् उद्भूतः महान् तरङ्गः रूपधरस्य नौकां बहुदूरं नीतवान् । किञ्चित्कालानन्तरं रूपधरः, तदीयाः अनुचराः च परस्परं सम्मिलितवन्तः । इतस्ततः विकीर्णाः ते परस्परं मेलनेन अतीव सन्तुष्टाः अभवन् । किन्तु केचन राक्षसस्य आहारत्वेन मृताः जाताः इत्यतः तेषां दुःखम् अपि महत् एव आसीत्। अनन्तरं ते रूपधरस्य कैश्चित् अनुचरैः आनीतान् मेषान् मारयित्वा समप्रमाणेन विभज्य खादितवन्तः। पानीयं पीत्वा महता आनन्देन तत् दिनं यापयित्वा रात्रौ शयितवन्तः।

अनन्तरदिने प्रातःकाले रूपधरः स्वानुचरान् उत्थाप्य आज्ञापितवान् यत् - प्रयाणार्थं सर्वे सज्जाः भवन्तु इति। रूपधरस्य वचनानुसारं नौकाः सिद्धाः जाताः । रूपधरः तदीयाः अनुचराः च स्वदेशं प्रति प्रस्थिताः।

(अनुवर्तते)



# र स वा र्ता:

## जन्तूनां सामर्थ्यम्

अमेरिकादेशस्य ओरिगान्प्रदेशस्थस्य 'कैटर्लेक् नेषनल्पार्क'मध्ये जून्मासस्य १९ दिनाङ्के ग्राह्मिलर्नामकः युवकः पत्न्या सह वार्तालापं कुर्वन् आसीत् । ताभ्यां सह पञ्चवर्षीयः 'बेर्'-नामकः शुनकः अपि आसीत् । शुनकः अपि कञ्चित् कालं



यावत् विहारं कृत्वा आगच्छतु इति उद्देशेन तौ शुनकस्य शृङ्खलां निष्कासितवन्तौ । शुनकः ततः धावन् गत्वा हिमेन आवृतायाः शिलायाः उपरि पादं स्थापितवान् । अपरक्षणे एव सः शुनकः पार्श्वस्थे गभीरे खाते पतितः । बहुधा अन्वेषणेन अपि सः शुनकः न लब्धः । अतः ग्राह्मिलर् तदीयशुनकस्य क्रीडनकानि तस्मिन् खाते क्षिप्त्वा पत्न्या सह गृहं गतवान् । किन्तु सप्ताहानन्तरं मिलर्वर्येण ज्ञातं यत् - तदीयः शुनकः पार्श्वस्थे ग्रामे सुरक्षितम् अस्ति इति । खातात् उपरि आगमनार्थं सः शुनकः सामान्यतः २१ कि.मी. दूरं यावत् चलितवान् इति ज्ञातम् । एतां घटनां विमृष्वन् उद्यानस्य अधिकारी उक्तवान् - ''जन्तूनां सामर्थ्यम् अपूर्वम् । तैः कर्तुम् अशक्यानि कार्याणि एव न सन्ति'' इति ।

## मार्जारपालनम्

केरलराज्यस्य अलेप्पिसमीपस्थस्य मान्थार्ग्रामस्य निवासी सुनीलः मार्जारपोषणम् अतीव इच्छति । तस्य समीपे नव मार्जाराः आसन् । तेषु 'अम्मु'नामकः मार्जारः सर्वेषां सुपरिचितः आसीत् । सः सुन्दरः कमशिक्षणयुतः च आसीत् । सः आईसमरीचिकाः बिस्किटान् च विना अन्यत् किमपि न खादति स्म । तस्य मार्जारस्य विषये ग्रामनिवासिनः बहुधा चर्चां कुर्वन्ति स्म । तस्य मार्जारस्य विषये सद्यः काचित् किंवदन्ती आरब्धा । अनन्तरदिने एव सः मार्जारः मृतः जातः । दिनद्वयानन्तरं सुनीलस्य पिता दिवङ्गतः । अनन्तरम् अवशिष्टाः अष्ट मार्जाराः अपि एकैकशः मृताः अभवन् । एतस्याः घटनातः दिग्भ्रान्तः सुनीलः स्वमित्राणि वदति यत् - इतःपरम् अहं मार्जारपालनं न करोमि इति ।

## कृत्रिमं हृदयम्

टोकियोविश्वविद्यालयस्य वैद्यविभागः एतेषु दिनेषु कञ्चित् विक्रमं साधितवान् अस्ति । तत्रत्याः निपुणाः वैद्याः पञ्चवर्षीयाय अजाय कृत्रिमं तर्कं हृदयं योजितवन्तः । शस्त्रचिकित्सानन्तरं शतं दिनानि अतीतानि । तथापि सः अजः आरोग्यवान् अस्ति । इतःपूर्वं तन्नाम १९९२ तमे वर्षे अपि अमेरिकादेशस्य विश्वविद्यालये एतादृशः प्रयत्नः कृतः आसीत् । तदा यस्मै प्राणिने कृत्रिमं हृदयं योजितम् आसीत्, सः ८८ दिनानि केवलं जीवितवान् आसीत् ।



# वचनभङ्गः

आरब्धं कार्यं परित्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्, शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''हे राजन् । कोऽपि स्वसमस्यापरिहारार्थं भवन्तं दैन्येन प्रार्थितवान् स्यात् । तस्मात् भवान् तस्य साहाय्यं कर्तुम् इच्छन् एतावन्तं परिश्रमं वहन् अस्ति इति मम सन्देहः । किन्तु मानवेषु बहवः स्वार्थिनः भवन्ति । ते स्वकार्यस्य सिद्धेः अनन्तरम् आत्मना दत्तं वचनं विस्मरन्ति । एतस्य निदर्शनार्थम् इन्द्रपुरस्य महाराज्ञ्याः इन्दुमत्याः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

इन्दुमती इन्द्रपुरस्य महाराजस्य जयसिंहस्य पट्टमहिषी । विवाहितायाः तस्याः द्वादश वर्षाणि अतीतानि चेदपि अपत्यानि न अभवन् । अपत्यप्राप्त्यर्थम्

## वेतालकथा



इन्दुमती सदा श्रद्धया देवपूजां करोति स्म। पुण्यक्षेत्राणां दर्शनं करोति स्म । सा प्रतिशनिवासरं निराहारा सती पर्वतस्थं कार्तिकेयस्य आलयं गत्वा अपत्यप्राप्त्यर्थं देवं प्रार्थयति स्म। अनन्तरं देवालयस्य पृष्ठतः स्थितस्य वटवृक्षस्य अधः विद्यमानं वल्मीकं पूजयति स्म।

इन्दुमती कदाचित् शनिवासरे देवं सम्प्रार्थ्य दुःखमिश्रितेन स्वरेण अर्चकम् उक्तवती - ''श्रद्धया भक्त्या च एतस्य देवस्य प्रार्थना क्रियते चेत् अपत्यप्राप्तिः भविष्यति इति जनाः वदन्ति। अहं त्रिंशतं शनिवासरान् यावत् विना लोपं एतस्य कार्तिकेयस्य पूजां कृतवती अस्मि। तथापि किमपि प्रयोजनं न जातम्'' इति।

तदा अर्चकः - ''महाराज्ञि ! भवती निराशा मा भवतु। देवः अवश्यं भवतीं पुत्रेण अनुग्रहीष्यति एव'' इति तां धैर्यवचनानि उक्तवान्।

एतत् श्रुत्वा इन्दुमती दीर्घं निश्वस्य, ततः देवालयस्य पृष्ठभागं गत्वा वल्मीकं क्षीरेण अभिषिच्य, हरिद्रा-कुङ्कुमाभ्यां पूजयित्वा ततः गन्तुम् उद्युक्ता । तदा - 'इन्दुमति ! अत्र आगच्छतु' इति ध्वनिः श्रुतः । एतस्मात् आश्चर्यचकिता इन्दुमती परितः अवलोकितवती । वटवृक्षात् अनतिदूरे शिलायां कश्चित् उपविष्टवान् आसीत्। दर्शनेन सः संन्यासी इव आसीत्।

अनामिकः कश्चित् आत्मानं नाम्ना आहूतवान् इत्यतः इन्दुमती क्षणकालं कुपिता । तावता सः मन्दहासपूर्वकम् उक्तवान् - ''इन्दुमति ! कुपिता मा भवतु भवती । अपत्यप्राप्त्यर्थं भवती व्रतादिकं कुर्वती अस्ति इति ज्ञात्वा भवतीम् अनुग्रहीतुम् आगतवान् अहम्'' इति।

स्वदुःखं ज्ञातवान् सः महानुभावः न सामान्यः इति ज्ञात्वा इन्दुमती तस्य समीपं गत्वा तं नमस्कृत्य उक्तवती - ''स्वामिन् ! कृपया माम् अनुगृह्णातु'' इति।

संन्यासी स्वपार्श्वे एव स्थितं स्यूतम् इन्दुमत्यै दर्शयन् उक्तवान् - ''एतस्मिन् स्यूते कदलीफलानि सन्ति । ततः एकमात्रं कदलीफलं स्वीकृत्य भवत्या खादनीयम् । तस्मात् भवत्याः इच्छा पूरिता भविष्यति'' इति।

इन्दुमती स्यूतसमीपं गत्वा दृष्टवती। स्यूते बहूनि कदलीफलानि आसन्। 'आरोग्यवान् पुत्रः आवश्यकः' इति चिन्तयन्ती इन्दुमती स्यूतात् स्थूलं किञ्चन फलं स्वीकृतवती। तत् फलं प्रसादं मत्वा नेत्रयोः स्पर्शं कृत्वा त्वक् निष्कास्य खादितवती। तदा ज्ञातं यत् - तत् फलं यमलम् आसीत् इति।



इन्दुमत्याः फलखादनसमये संन्यासी मौनम् उत्थाय स्यूतं गृहीत्वा ततः निर्गतवान् आसीत्।

ततः त्रयः मासाः अतीताः। राज्ञी इन्दुमती गर्भवती जाता। एतस्मात् इन्दुमती जयसिंहः च अतीव सन्तुष्टौ। नवानां मासानाम् अनन्तरम् इन्दुमती प्रसूतवती। किन्तु पूर्वं तया खादितस्य कदलीफलस्य इव शिशुद्वयस्य अपि शरीरं परस्परं युक्तम् आसीत्।

दश दिनानि अतीतानि। तदा राजवैद्याः परीक्ष्य उक्तवन्तः - "षट्सप्ताहाभ्यन्तरे शस्त्रचिकित्सया शिशुद्वयस्य शरीरं पृथक्करणीयम्। नो चेत् प्राणापायः भविष्यति" इति।

तदा जयसिंहः उक्तवान् - "अविलम्बेन शस्त्रचिकित्साकार्यं भवतु" इति।

एतत् श्रुत्वा चिन्तामग्नाः राजवैद्याः उक्तवन्तः - "महाराज! अनुभविभिः वैद्यैः एव एषा शस्त्रचिकित्सा करणीया। तादृशः समर्थः शस्त्रचिकित्सकः कोऽपि अस्माकं राज्ये नास्ति" इति।

"तर्हि अन्यत्र कुत्र अस्ति तादृशः समर्थः शस्त्रचिकित्सकः?" इति पृष्टवान् महाराजः।

तदा इन्दुमती उक्तवती - "एतां शस्त्रचिकित्सां यः करोति, तस्मै पारितोषिकं दीयते इति प्रकटनं कुर्वन्तु" इति। राजवैद्याः क्षणं विचिन्त्य उक्तवन्तः - "महाराज्ञि! अस्माकं ज्ञानानुसारम् अश्विनीदत्तनामकः वैद्यः एतां शस्त्रचिकित्सां कर्तुं समर्थः" इति।

अश्विनीदत्तस्य नामश्रवणमात्रेण कुपितः राजा जयसिंहः उक्तवान् - "अश्विनीदत्तः नाम चन्द्रगिरिराज्यस्य आस्थानवैद्यः खलु! चन्द्रगिरेः राजा रुद्रसेनः मम शत्रुः। अतः मम अपत्यं मृतं भवति चेदपि चिन्ता नास्ति। किन्तु मम शत्रोः साहाय्यं न प्रार्थयामि

अहम्" इति।

जयसिंहस्य पुत्रप्राप्तिः जाता इति वार्तां श्रुत्वा प्रतिवेशिराज्यानां राजानः अभिनन्दनसन्देशान् प्रेषितवन्तः। किन्तु चन्द्रगिरेः राजा रुद्रसेनः – 'यद्यपि पुमपत्यं जातम्, तथापि शरीरं परस्परं युक्तम् अस्ति खलु। दुःखस्य विषयः एषः' इति सन्तापसूचकसन्देशं प्रेषितवान्।

एतं सन्देशं दृष्टवतः जयसिंहस्य कोपः प्रवृद्धः।

इन्दुमती हितवचनेन पतिं बोधितवती यत् – पुत्रयोः हितरक्षणार्थं रुद्रसेनस्य साहाय्यम् अनिवार्यम् इति।

एतत् श्रुत्वा जयसिंहः कोपेन उक्तवान् – "अस्मिन् विषये अधिकम् अनुरोधं मा करोतु भवती। अहं सर्वथा रुद्रसेनस्य साहाय्यं न इच्छामि" इति।

'पत्युः सकाशात् एतत् कार्यं साधयितुं न शक्यम्' इति विचिन्त्य इन्दुमती चिन्तितवती यत् मया एव अश्विनीदत्तस्य समीपं गत्वा विषयः निवेदनीयः इति।

अनन्तरदिने सा यमलौ पुत्रौ वैद्यानां रक्षणे स्थापितवती। 'मातृगृहम् गत्वा आगमिष्यामि' इति पतिं जयसिंहम् उक्त्वा महाराज्ञीवेषं परिवृत्य कयाचित् दास्या सह प्रस्थितवती च। महता परिश्रमेण दिनद्वयं यावत् अरण्यमार्गेण प्रयाणं कृत्वा इन्दुमती चन्द्रगिरिं प्राप्तवती।

चन्द्रगिरौ राजवैद्यस्य अश्विनीदत्तस्य वासस्थानस्य अन्वेषणं कष्टाय न जातम्।

अश्विनीदत्तः ब्रह्मचारी। इन्दुमती यदा तस्य गृहं प्राप्तवती तदा सः पाकं सज्जीकुर्वन्



आसीत् । द्वारताडनशब्दं श्रुत्वा अश्विनीदत्तः एव आगत्य द्वारम् उद्घाटितवान् ।

अश्विनीदत्तं दृष्ट्वा इन्दुमती - "महता कष्टेन सुदूरात् आगता अस्मि अहम् । पुत्रभिक्षया माम् अनुग्रहीतुं भवान् एव समर्थः" इति वदन्ती तं नमस्कृतवती । दुःखेन तस्याः नेत्राभ्याम् अश्रुबिन्दवः पतिताः ।

एतत् दृष्ट्वा अश्विनीदत्तः - "अम्ब ! दुःखं मा करोतु भवती । सर्वं शुभमयं भविष्यति । 'सुदूरात् आगतवती' इति वदन्ती अस्ति भवती । अतः प्रथमं भोजनं करोतु" इति वदन् इन्दुमत्यै, तया सह आगतायै दास्यै च भोजनपरिवेषणार्थम् उद्युक्तः ।

भोजनस्य समाप्तेः अनन्तरम् इन्दुमती स्वयमलपुत्रयोः विषयं, शस्त्रचिकित्सा-विषयं च अश्विनीदत्तं निवेदितवती ।

इन्दुमत्या उक्तं श्रुत्वा अश्विनीदत्तः ताम् उद्दिश्य - "भवत्याः पुत्रयोः कोऽपि क्लेशः न भवति । अहं शस्त्रचिकित्साकार्यं निर्वर्तयामि । भवत्याः ग्रामः इतः कियत् दूरे अस्ति ?" इति पृष्टवान् ।

"इन्द्रपुरं मम राज्यम् । अहम् इन्द्रपुरस्य महाराज्ञी अस्मि" इति निर्भयेन उक्तवती इन्दुमती ।

इन्दुमत्याः एतत् वचनं श्रुतवतः अश्विनीदत्तस्य शरीरे कम्पनम् आरब्धम् । मुखं कान्तिहीनम् अभवत् । सः उक्तवान् - "एतस्याः शस्त्रचिकित्सायाः अनन्तरं चन्द्रगिरेः राजा मां मारयेत् । एषः विषयः भवत्या ज्ञातः एव स्यात् इति चिन्तयामि अहम्" इति ।





तदा इन्दुमती प्रार्थितवती - ''केनापि प्रकारेण भवतः प्राणहानिः न भविष्यति इति अहं वचनं ददामि । भवान् कृपया मयि विश्वस्य मम आशां पूरयतु'' इति।

अश्विनीदत्तः क्षणकालं विचिन्त्य ''भवतु, गच्छाम'' इति वदन् गृहं कीलयित्वा इन्दुमत्या सह प्रस्थितः । दिनद्वयानन्तरं ते इन्द्रपुरं प्राप्तवन्तः । अनन्तरदिने एव अश्विनीदत्तः शस्त्रचिकित्साद्वारा यमलयोः पुत्रयोः शरीरं पृथक्कृतवान् । अश्विनीदत्तस्य शस्त्रचिकित्साकौशलम् अपूर्वम् इति इन्द्रपुरजनाः सर्वे प्रशंसापूर्वकं तम् अभिनन्दितवन्तः।

तस्मिन् एव दिने जयसिंहः इन्दुमती च समग्रे राज्ये प्रकटनं कारितवन्तौ - ''परस्परं युक्तयोः यमलयोः शरीरं शस्त्रचिकित्साद्वारा पृथक्कृत्य इन्द्रपुरस्य वंशं रक्षितवान् महानुभावः चन्द्रगिरिराज्यस्य आस्थानवैद्यः अश्विनीदत्तः। तस्मै इन्द्रपुरस्य राजा, राज्ञी, प्रजाः च कृतज्ञताः समर्पयन्ति'' इति।

अनन्तरदिने एषा वार्ता प्रतिवेशिराज्येषु अपि प्रसृता।

स्ववंशस्य रक्षकाय अश्विनीदत्ताय उपायनं दातुम् उद्युक्ताम् इन्दुमतीं निवारयन् अश्विनीदत्तः - ''महाराज्ञि ! भवत्या महान् उपकारः कृतः । तदर्थम् अहं भवत्यै कृतज्ञताः समर्पयामि'' इति उक्त्वा स्वराज्यं प्रतिगतवान्।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! इन्दुमत्या अश्विनीदत्ताय यत् वचनं दत्तम् आसीत्, तस्य भङ्गः जातः खलु ! तस्य प्राणहानिः यथा न भवेत्, तथा व्यवस्थां करोमि इति इन्दुमत्या वचनं दत्तम् आसीत्। एवं सति 'युक्तयोः यमलयोः शरीरं पृथक्कृतम्' इति विषयः प्रकटनद्वारा राज्ये सर्वत्र प्रसारितः इति यत् तस्य तात्पर्यम् अश्विनीदत्तस्य प्राणहानिः जाता इत्येव खलु ! एषः अपायकरः विषयः इति जानन् अपि अश्विनीदत्तः शस्त्रचिकित्साकरणं किमर्थम् अङ्गीकृतवान् ? अपि च शस्त्रचिकित्सायाः अनन्तरं 'भवत्या महान् उपकारः कृतः' इति अश्विनीदत्तः किमर्थम् इन्दुमतीम् उक्तवान् ? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्,

तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - "वैद्यशास्त्रे निपुणः अश्विनीदत्तः स्वजीवनं वैद्यकीयसेवार्थम् एव अर्पितवान् अस्ति। स्वकार्यस्य विघ्नः न भवेत् इति कारणतः एव सः ब्रह्मचारित्वेन स्थितवान्। प्रामाणिकः विवेकी च वैद्यः चिन्तयति यत् - शत्रुः चेदपि यदि रोगेण पीडितः भवति, तर्हि तस्य चिकित्साकरणं प्रथमं कर्तव्यम् इति। एतस्मात् कारणात् एव स्वजीवितान्त्यं जानन् अपि अश्विनीदत्तः शस्त्रचिकित्सां कर्तुं इन्दुमत्या सह प्रस्थितः। किन्तु तादृशी शस्त्रचिकित्सा तेन एव कर्तुं शक्या, यश्च वैद्यशास्त्रस्य सूक्ष्मान् अंशान् जानाति। तादृशः सूक्ष्ममतिः ऋते अश्विनीदत्तात् न कोऽपि आसीत् परितः स्थितेषु राज्येषु अपि। अतः शस्त्रचिकित्सा अश्विनीदत्तेन एव कृता इति चन्द्रगिरेः राजा रुद्रसेनः जानीयात् एव। अपि च सः शत्रोः वंशरक्षकम् अश्विनीदत्तं कठोरं दण्डयेत् अपि। एतम् अपायं ज्ञात्वा इन्दुमती अश्विनीदत्तस्य नाम सर्वैः ज्ञातव्यम् इत्येव कृतज्ञतासमर्पणव्याजेन राज्ये सर्वत्र प्रकटनं कारितवती। एवं करणेन वृत्तिधर्मं पालयितुं स्वप्राणान् अपि पणीकृत्य शत्रुराज्ये कृतज्ञताः प्राप्तवन्तं, स्वराज्यस्य गौरवस्य कारणीभूतम् अश्विनीदत्तं दण्डयितुं रुद्रसेनस्य धैर्यं न भवति। अकस्मात् सः दण्डयितुम् इच्छति चेदपि जनाः आवश्यं विरोधं प्रकटयन्ति। एतस्मात् अन्तरङ्गे इच्छा नास्ति चेदपि लोकभयात् अश्विनीदत्तस्य विजयः चन्द्रगिरिराज्ञा रुद्रसेनेन अभिनन्दनीयः एव। एवं महतीम् अपि समस्याम् उपायेन परिहृतवती इन्दुमती। अतः एव अश्विनीदत्तः तस्यै कृतज्ञताः समर्पितवान्। एतैः कारणैः ज्ञायते यत् - इन्दुमत्या वचनभङ्गः न कृतः, न वा कृतघ्नता आचरिता इति" इति।

एवं यदा राज्ञः मौनभङ्गः जातः, तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# राजनर्तकी

अवन्तीनगरस्य कुसुमपुरस्य च महान् सम्बन्धः आसीत् । अवन्तीनगरस्य कौमुदीनामिका राजनर्तकी राजाज्ञानुसारं कुसुमपुरं गत्वा तत्रत्येषु उत्सवेषु नाट्यं कृतवती । नाट्यकार्यक्रमं समाप्य अवन्तीनगरं प्रति आगमनसमये मध्येमार्गं सा चोरैः गृहीता । कौमुद्याः रक्षकाः सैनिकाः चोरान् सम्मुखीकर्तुम् अशक्ताः सन्तः ततः पलायितवन्तः ।

तदा चोराः तां नर्तकीं स्वनायकसमीपं नीतवन्तः । कौमुदी चोरनायकम् उद्दिश्य कोपेन उक्तवती - ''अहं का इति भवद्भिः न अभिज्ञातं किम् ? अहम् अवन्तीनगरस्य राजनर्तकी अस्मि । भवद्भिः धृत्वा बद्धा इति वार्ता महाराजेन अवश्यं ज्ञायते एव । सः स्वसैन्यं सम्प्रेष्य भवतः सर्वान् नाशयिष्यति'' इति ।

एतत् श्रुत्वा तत्र स्थितेषु कश्चित् उपहासपूर्वकम् उक्तवान् - ''भवती आत्मानं राजनर्तकी इति परिचायितवती । महाराज्ञी इति न उक्तवती खलु ।'' इति ।

एतत् श्रुत्वा अन्ये अपि हसितवन्तः । तदा चोरनायकः ताम् उक्तवान् - ''भवती अस्माकं पुरतः नृत्यप्रदर्शनपूर्वकम् आत्मनः राजनर्तकीत्वं समर्थयतु तावत्'' इति ।

तदा कौमुदी महता कोपेन उक्तवती - ''हुं, वन्यमानवानां भवतां पुरतः मम नाट्यप्रदर्शनम् !! राजास्थाने केवलं मया नृत्यं क्रियते । भवद्भिः मम मारणं क्रियते चेदपि न कापि चिन्ता मम । किन्तु अहम् अत्र नृत्यप्रदर्शनं न करिष्यामि'' इति ।

कौमुद्याः एतत् वचनं श्रुत्वा चोरनायकः नितरां सन्तुष्टः अभवत् । सः स्वकीयान् अनुचरान् आज्ञापितवान् - ''आम् । एषा राजनर्तकी इत्यत्र नास्ति सन्देहः । एषा नृत्तैः वास्तविकं मूल्यं जानाति । सपरिवारम् एतां सगौरवम् अरण्यसीमापर्यन्तं सम्प्रेष्य आगच्छन्तु'' इति ।







# दक्षिणभारतीयानि दुर्गाणि

रचना - मीरा * चित्राणि - अरिन्रा



देवगिरिदुर्गं दक्षिणभारतदेशस्य 'सिंहद्वारम्' इति उच्यते । दक्षिणप्रस्थभूम्याः मध्यभागे कृष्णवर्णीयपर्वतशिलायां दृढं गम्भीरं च स्थितम् इत्यतः एतत् दुर्गं 'सिंहद्वारम्' इति नाम्ना प्रख्यातं जातम् ।

एतत् नगरं परितः सुदृढा रक्षकभित्तिः आसीत् । न केवलं तावत्, नगरस्य दुर्गस्थस्य पर्वतस्य मध्यभागे तन्नाम पर्वतं परितः दृढाः उन्नताः च भित्तयः आसन् । तिस्रः परिखाः च आसन् । शत्रूणाम् आक्रमणं यदा भवति तदा परिखासु जलम् अधिकतया प्रेषयन्ति स्म । क्रमाणार्थं स्थितां सेतुं च जले मज्जयन्ति स्म ।

अकस्मात् शत्रवः परिखाम् अतिक्रम्य आगच्छन्ति चेदपि तैः साक्षात् सुरङ्गमार्गः एव प्रवेष्टव्यः आसीत् । अन्यः मार्गः न आसीत् । राजप्रासादः गन्तव्यः चेत् तेन

देवगिरिदुर्गस्य पुरातनं शिखरम्

सुरङ्गमार्गेण एव गन्तव्यम् । किन्तु सः मार्गः अन्धकारमयः अपायकरः च आसीत् । सैनिकाः भित्तेः पृष्ठतः निलीय स्थित्वा शत्रूणां चित्रहिंसां कुर्वन्ति स्म । यदि शत्रवः अधिकसंख्याकाः भवन्ति, तर्हि सुरङ्गे धूमम् उत्पादयन्ति स्म । तस्मात् श्वासोच्छ्वासं कर्तुम् अशक्ताः शत्रवः मृताः भवन्ति स्म । मध्येमार्गं सुरङ्गः त्रिधा विभक्तः आसीत् । तेषु त्रिषु मार्गेषु मार्गद्वयेन गम्यते चेत् शत्रवः गभीरान् ह्रदान् प्राप्य भीकरं मरणं प्राप्नुवन्ति स्म ।



दौलताबाददुर्गस्य स्वरूपचित्रम्

सुदुमार्गेण सुरङ्गम् अतिक्रम्य अग्रे गतं चेदपि राजभवनस्य प्राप्त्यर्थं बहूनि कष्टानि अनुभोक्तव्यानि आसन्।

एतत् दुर्गं क्रि.श. द्वितीयशतकस्य शातवाहनकालीनम्। शताधिकानि वर्षाणि यावत् यादवाः एतस्य शासनकार्यं निरूढवन्तः। यादवानां सकाशात् १२९५ तमे वर्षे एतत् दुर्गम् अल्लाउद्दीन् खिल्जीवर्यः स्वायत्तीकृतवान्। सुल्तानः महम्मद् बिन् तुगलक्वर्यः एतत् दुर्गं दृष्ट्वा चिन्तितवान् यत् - भूमण्डले सुरक्षितं स्थलं नाम एतदेव इति। अतः एव सः कानिचन दिनानि यावत् देवगिरिदुर्गं स्वराजधानी कृत्वा शासनं कृतवान्। इदानीम् एतत् 'दौलताबाद्' इति उच्यते।

तुगलकस्य सामन्तः बहमन्षावर्यः गुल्बर्गं स्वराजधानीं कृत्वा बहमनीवंशं स्थापितवान्। ततः बहमनीवंशजाः स्वराजधानीं त्रिभिः खातैः, दृढया दुर्गभित्त्या च युक्तं सुरक्षितं बीदरनगरं प्रति नीतवन्तः।

दक्षिणभारतीयानि प्राचीनतमानि यवनभवनानि बीदरनगरे सन्ति।

दौलताबाददुर्गस्य चान्दमिनार्

गुल्बर्गदुर्गस्य आवरणम्



बीदरदुर्गस्य रक्षकभित्तयः

१५ शतके बहमनीवंशस्य पतनम् आरब्धम् ।

१४९० तमे वर्षे यूसुप अदिल्खान्वर्यः बिजापुरतः गत्वा अदिल्षाहीनामकं वंशं स्थापितवान् ।

एतद्वंशस्य प्रख्यातस्य राज्ञः महम्मद् अदिल्षावर्यस्य स्मारकं 'गोलगुम्बज्' इति नाम्ना व्यवह्रियते । एतत् प्रपञ्चस्य उन्नतेषु गोम्मटभवनेषु द्वितीयम् अस्ति ।

दूरस्थायाः नद्याः जलं कुल्यामार्गेण आनीय भूमेः अन्तः स्थितानां जलवाहकनालानां द्वारा दुर्गस्य अन्तः नीत्वा उपयुज्यते स्म आदिल्षाकाले ।



*गोलगुम्बज् । एतस्य भवनस्य अन्तः सकृत् ध्वनिः क्रियते चेत् तत् दशवारं प्रतिध्वनितं भवति । हस्तघटी भित्तिसमीपं स्थाप्यते चेत् ततः श्रूयमाणः 'टिक् टिक्' शब्दः पुरस्तात् भित्तितः श्रोतुं शक्यः ।*

*तत्त्वज्ञानिना कविना सङ्गीतज्ञेन च द्वितीय-इब्राहिम् अली अदिल्षावर्येण निर्मितम् इब्राहि रोजा । प्रथमं प्रार्थनाभवनम् । द्वितीयं सुल्तान्स्मारकम् ।*

अहमद्निजाम्षानामकः अन्यः सामन्तराजः अहमद्नगरं स्वराजधानीं कृत्वा शासनं कुर्वन् निजाम्षावंशम् अभिवर्धितवान् ।

अहमदनगरदुर्गम्

१५९५ तमे वर्षे डिसेम्बर्मासे मोगलाः अहमद्दुर्गस्य उपरि आक्रमणं कृतवन्तः । तत्काले सहोदरपुत्रस्य प्रतिनिधित्वेन चान्दबीबीवर्या शासनं कुर्वती आसीत् । सा मोगलानाम् आक्रमणं धैर्येण सम्मुखीकृतवती । एवं हि श्रूयते यत् युद्धसामग्र्यः यदा समाप्ताः तदा सा सुवर्णेन गोलकानि निर्माप्य अस्त्रेषु पूरयन्ती युद्धं कृतवती इति ।



चान्दबीबी

१५९६ तमे वर्षे कृतस्य सन्धेः परिणामतः तत्र तात्कालिकी शान्तिः स्थिता अभवत् ।

भारते स्वातन्त्र्यसङ्ग्रामः यदा प्रवर्तमानः आसीत् तदा आंग्लेयाः अहमदुर्गं कारागारत्वेन उपयुक्तवन्तः आसन् । सरदार-वल्लभायीपटेल्, जवहरलालनेहरू, अब्दुल्कलाम् आजाद्, आचार्यकृपालानी इत्यादयः प्रसिद्धाः नायकाः अहमदुर्गे कारागारवासम् अनुभूतवन्तः आसन् । एतस्मिन् दुर्गरूपे कारागारे वसन् एव नेहरूवर्यः 'भारतदर्शनं' नामकं प्रसिद्धं ग्रन्थं रचितवान् आसीत् ।



# पराजितः पिशाचः

शिवपुरनामके ग्रामे शिवनामकः कश्चित् आसीत्। तदीये षोडशे वयसि एव तस्य पिता दिवङ्गतः। शिवः बुद्धिमान्, किन्तु अलसः।

कदाचित् शिवस्य माता पुत्रम् उक्तवती – ''वत्स ! शिव ! भवान् क्षेत्रविषये न चिन्तयति चेत् अस्माकं जीवननिर्वहणम् कष्टाय भविष्यति'' इति।

तदा शिवः आलस्यं प्रकटयन् – ''वृष्टौ आतपे च क्षेत्रे कार्यकरणं मह्यं न रोचते। अन्यं कमपि उद्योगं कुर्याम्। किन्तु मह्यं कः उद्योगं दद्यात् ?'' इति वदन् गृहात् निर्गतवान्। बहुदूरं गत्वा सः सायङ्कालसमये किञ्चन अरण्यं प्राप्तवान्।

तावता अतीव श्रान्तः शिवः विश्रान्त्यर्थं कस्यचित् वृक्षस्य अधः उपविष्टवान्। 'इदानीन्तनपरिस्थितिः अत्यन्तं कष्टदायिका अस्ति। यदि इदानीं कश्चित् व्याघ्रः पिशाचः वा आगत्य मां खादिष्यति, तर्हि कष्टेभ्यः मुक्तिं प्राप्स्यामि' इति चिन्तितवान् शिवः।

अपरक्षणे एव वृक्षस्य पृष्ठभागतः – ''अत्र समीपे व्याघ्रः नास्ति। किन्तु अहम् अस्मि'' इति वचनं श्रुतम्।

अपरक्षणे एव कश्चित् पिशाचः 'हा' इति उच्चैः हसन् शिवस्य पुरतः आगत्य उक्तवान् – ''चिन्तनमात्रेण भवतः पुरतः प्रत्यक्षः जातः अहम् इति कारणतः आश्चर्यं भवति वा भवतः ? अलसाः मम अतीव प्रियाः'' इति।

पिशाचं दृष्ट्वा यद्यपि शिवः क्षणकालं भीतः, तथापि आत्मानम् 'अलसः' इति उक्तवान् पिशाचः इत्यतः कुपितः सः ''आम् ! अहम् अलसः एव। भवान् किं साहाय्यं कर्तुं शक्नुयात् ?'' इति पृष्टवान्।

''भवान् यत् इच्छति तत् दास्यामि। किन्तु मम केचन नियमाः भवता



अङ्गीकरणीयाः'' इति उक्तवान् पिशाचः।

''के नियमाः ?'' इति पृष्टवान् शिवः।

तदा पिशाचः उक्तवान् - ''षण्मासान् यावत् अहं भवतः सेवकत्वेन स्थास्यामि। तस्मिन् अवधौ भवान् यत् इच्छति तत् दास्यामि। महाराजः इव भवान् सर्वविधानि सुखानि अनुभोक्तुं शक्नोति। किन्तु एषा व्यवस्था षण्मासपर्यन्तं केवलम्'' इति।

अत्र कापि वञ्चना स्यात् इति सन्देहम् अनुभवन् शिवः पृष्टवान् - ''षण्मासानन्तरम् ?'' इति।

तदा पिशाचः उक्तवान् - ''षण्मासानन्तरम् आजीवनं भवता मम सेवकत्वेन स्थातव्यम्। अहं भवन्तं मया सह नेष्यामि। किन्तु षण्णां मासानाम् अवधौ भवता उक्तेषु कार्येषु एकं कार्यं मया न क्रियते चेदपि एषः नियमः न अन्वेति। तदा भवान् स्वतन्त्रः भविष्यति। अहम् अपि इतः निर्गमिष्यामि'' इति।

शिवः पिशाचस्य नियमान् अङ्गीकृतवान्। अपरक्षणे एव तदीयः युतककोषः सुवर्णनाणकैः पूर्णः जातः।

''यदा मम आवश्यकता भवति, तदा मां स्मरतु'' इति शिवम् उक्त्वा पिशाचः ततः अदृश्यः अभवत्।

शिवः ततः स्वगृहं प्रति गत्वा प्रवृत्तं सर्वं मातरं निवेद्य सुवर्णनाणकानि दर्शितवान्। षण्मासान्तरं पुत्रः शिवः आजीवनं पिशाचस्य सेवकत्वेन स्थास्यति इति ज्ञात्वा माता पुत्रम् उक्तवती - 'पिशाचेन सह कृतं सन्धिं प्रतिस्वीकरोतु' इति। किन्तु शिवः मातुः एतत् वचनं न अङ्गीकृतवान्। तस्मात् अतीव कुपिता सा पुत्रं द्वारात् बहिः नोदयित्वा द्वारं पिधाय अर्गलं स्थापितवती।

ततः शिवः अरण्यं गत्वा पिशाचं स्मृतवान्। अपरक्षणे प्रत्यक्षीभूतं पिशाचं शिवः उक्तवान् - ''अहम् अन्यस्मिन् अरण्ये वासं कर्तुम् इच्छामि। अतः मम वासार्थं सुन्दरं भवनं, कार्यार्थं कर्मकराः, सुवर्णनाणकानि च आवश्यकानि'' इति।

क्षणाभ्यन्तरे पिशाचः शिवस्य आवश्यकताः पूरितवान्। शिवः एकमासं यावत् सुखेन कालं यापयित्वा पुनरपि पिशाचं स्मृतवान्। पिशाचः प्रत्यक्षः जातः। तदा शिवः पिशाचम् उक्तवान् - ''अरण्ये

मम अटनार्थम् एकः गजः, चत्वारः अश्वाः च आवश्यकाः'' इति।

पिशाचः गजम् अश्वान् च व्यवस्थापितवान्। एकः मासः अतीतः। शिवः पुनरपि पिशाचं स्मृतवान्। पिशाचस्य दर्शनसमनन्तरं तम् उक्तवान् - ''मम सन्देहः अस्ति यत् अस्मिन् अरण्ये चोराः अटन्ति इति। अतः मम भवनस्य रक्षणार्थं पालितशुनकसदृशाः षट् व्याघ्राः आवश्यकाः'' इति।

पिशाचः व्याघ्रान् आनीय भवनस्य पुरतः बद्धवान्। पुनः पिशाचम् आहूय शिवः उक्तवान् - ''मम भवनं परितः उन्नता भित्तिः निर्मातव्या। अनुपयुक्ताः वृक्षाः उत्पाट्य क्षेप्तव्याः। भवनस्य पूर्वदिशि याः महाशिलाः सन्ति, ताः निष्कास्य पर्वतशिखरे स्थापनीयाः'' इति।

शिवस्य एतादृशानि कार्याणि कृत्वा श्रान्तः पिशाचः कोपेन शिवम् उद्दिश्य उक्तवान् - ''भवान् एवं मम स्नेहस्य दुरुपयोगं करोति इति यदि पूर्वम् एव मया ज्ञातं स्यात्, तर्हि अहं भवतः स्नेहम् एव न अकरिष्यम्। भवतु अग्रिमदिनेषु भवान् मम अधीनः भविष्यति खलु! तदा भवन्तं क्वथिते तैले निमज्ज्य, खादिष्यामि। तीक्ष्णेन खड्गेन भवन्तं कर्तयित्वा अवलेहः इव षण्मासान् यावत् खादिष्यामि'' इति।

''भवतः अधीने भवामि चेत् एव खलु तत् सर्वम्। देवः दयालुः अस्ति। पश्याम तावत्'' इति हसन् उक्तवान् शिवः।



पञ्च मासाः अतीताः। शिवेन यत्किमपि पृष्टं चेदपि पिशाचः क्षणाभ्यन्तरे तत् व्यवस्थापयति स्म।

षष्ठे मासे शिवस्य चिन्ता आरब्धा। पिशाचेन कृतः स्नेहः स्वहिताय न जातम् इति चिन्ता शिवं प्रतिक्षणं बाधते स्म। षष्ठमासस्य अन्तिमदिने रात्रौ शिवः चिन्तामग्नः सन् भवनात् निर्गत्य अरण्यस्य मध्यभागे स्थितं नदीतीरं गत्वा उपविष्टवान्। नद्याः मण्डूकाः 'बटर्, बटर्' इति शब्दं कुर्वन्ति स्म। तेषु कश्चित् मण्डूकः उत्प्लुत्य शिवस्य उपरि पतितः। एतस्मात् सम्भ्रान्तः शिवः उत्थातुम् उद्युक्तः। किन्तु सः मण्डूकः झटिति एव पुनः नदीं प्रविष्टवान्। एतत् दृष्टवतः शिवस्य मनसि कश्चन उपायः

स्फुरितः । अपरक्षणे सः महता सन्तोषेण - "रे पिशाच ! शीघ्रम् आगच्छतु" इति उच्चैः आहूतवान् ।

वृक्षशाखाभ्यः पिशाचः प्रत्यक्षः जातः । शिवः पिशाचम् उक्तवान् - "इदानीं मया उच्यमानं कार्यं भवता करणीयम्" इति ।

"आवयोः सन्ध्यनुगुणम् इतोऽपि अर्धघण्टां यावत् अहं भवतः सेवकः एव अस्मि । एतावत्पर्यन्तं भवता उक्तानि सर्वाणि अपि कार्याणि विना लोपं मया निरूढानि । शीघ्रं वदतु तावत्, किं कार्यम् इति । तत् कार्यं समाप्य भवन्तं खादिष्यामि अहम्" इति उक्तवान् पिशाचः ।

तदा शिवः उक्तवान् - "मण्डूकानां वटर्‌शब्दस्य सङ्गीतं श्रोतुम् इच्छामि अहम् । किन्तु तस्य श्रवणं नदीतः न, अपि तु वृक्षाणां शाखाभ्यः । अतः भवान् नद्यां स्थितान् सर्वान् मण्डूकान् वृक्षशाखायां मेलयतु । तेषां स्वरस्य तालमाधुर्यं मां श्रावयतु" इति ।

एतत् श्रुत्वा पिशाचः क्रोधेन शिवं पश्यन् - "विचित्रा अपेक्षा भवतः" इति वदन् उत्प्लुत्य नदीं प्रविष्टवान् । हस्ते लब्धान् मण्डूकान् नीत्वा वृक्षशाखायां स्थापितवान् च । पुनः काश्चन मण्डूकान् ग्रहीतुम् इच्छन् पिशाचः यावत् नदीं प्रविष्टवान्, तावता शाखासु स्थिताः मण्डूकाः उत्प्लुत्य नदीं प्रविष्टवन्तः । पिशाचः कोपेन पुनः पुनः मण्डूकान् वृक्षशाखासु स्थापयति स्म । ते पुनरपि नदीं प्रविशन्ति स्म । एवमेव अर्धघण्टा अतीता । तदा शिवः महता सन्तोषेण पिशाचम् उद्दिश्य - "आवाभ्यां कृतस्य सन्धेः अनुगुणं मया उक्तं कार्यं भवान् कर्तुं न शक्तः इत्यतः इदानीम् अहं स्वतन्त्रः जातः । सन्धेः अवधिः अपि समाप्तः । एषः मम जीवनस्य रोचकः अनुभवः अस्ति । इतःपरम् अहं गृहं गत्वा आलस्यं परित्यज्य कृषिकार्यं, मातुः सेवां च कुर्वन् सुखेन जीविष्यामि" इति उक्त्वा ततः प्रस्थितः ।

"रे अलसश्रेष्ठ ! मां पराजितं कृतवान् भवान् निश्चयेन चतुरः एव । इतःपरं कदापि अहम् अलसानां स्नेहं न करिष्यामि" इति वदन् ततः निर्गतवान् पिशाचः ।





# सीतापतेः गर्वभङ्गः

श्रीरङ्गपुरस्य सीतापतेः महान् गर्वः आसीत् यत् अहं बहु बुद्धिमान् इति। किन्तु जनाः तं मूर्खं मन्यन्ते स्म। स्वबुद्धिमत्ता कथञ्चित् प्रदर्शनीया इति उद्देश्येन सः कदाचित् ग्रामाधिकारिणः समीपं गतवान्।

ग्रामाधिकारी तं – "भोः ! भवान् महामूर्खः इति एतद्ग्रामस्थाः सर्वे वदन्ति। 'अहं बुद्धिमान्' इति भवान् यावत् वदति चेदपि ते न अङ्गीकुर्वन्ति। अतः एतद्ग्रामस्थाः यं बुद्धिमन्तं मन्यन्ते तेन मिलित्वा तस्य अङ्गीकारं प्राप्य भवान् आत्मनः बुद्धिमत्तां निरूपयतु। तदा एतद्ग्रामस्थाः सर्वे भवन्तं बुद्धिमन्तं मन्यन्ते" इति उक्तवान्।

यदा सः ग्रामस्थैः बुद्धिमन्तं मन्यमानं अन्विष्यन् आसीत् तदा एव तं ग्रामं सिद्धरामः नाम योगी आगतवान्। तस्य विचारान् श्रोतुं जनाः अहमहमिकया गच्छन्ति स्म। तदा सीतापतिः चिन्तितवान् – 'यदि सिद्धरामः मां बुद्धिमन्तं मन्यते तर्हि सर्वे जनाः मां बुद्धिमन्तं मन्यन्ते' इति। अतः एकस्मिन् दिने सीतापतिः अपि तस्य उपन्यासं श्रुतवान्।

सिद्धरामः तस्मिन् दिने बहून् विचारान् उक्तवान्। तत्र प्रधानाः अंशाः – "श्वेतकाकाः न भवन्ति। अतः तेषाम् अन्वेषणं मूर्खताद्योतकम्। सर्वे जीविनः अपि भगवतः अंशाः एव। रावणः यद्यपि महापुरुषः एव, तथापि सः परस्त्रीव्यामोहेन नाशं गतः। अतः एकोऽपि दुर्गुणः स्वस्मिन् यथा न भवेत् तथा सर्वैः यत्नः करणीयः" इति सः सर्वान् उपदिष्टवान्।

उपन्यासस्य समाप्तेः अनन्तरं विरामकाले सीतापतिः सिद्धरामेण मिलित्वा – "श्रीमन् ! अहं तर्कशास्त्रे अद्वितीयः अस्मि। अद्य भवता उक्ताः केचन विचाराः

"भामहः"



तर्कशास्त्रानुसारं युक्ताः न सन्ति इति मे भासते । सन्देहनिवारणार्थम् आगतोऽस्मि'' इति अवदत् ।

''यत् प्रष्टव्यम् अस्ति तत् पृच्छतु वत्स'' इति उक्तवान् सिद्धरामः ।

''श्वेतकाकाः न भवन्ति इति उक्तं खलु भवता ! तस्य प्रमाणं किम् ?'' इति सीतापतिः पृष्टवान् ।

''मम ज्ञानानुसारम् अद्यपर्यन्तं केनापि कुत्रापि श्वेतकाकः न दृष्टः'' इति निश्चिन्तः सन् उक्तवान् सिद्धरामः ।

''तर्हि मम ज्ञानानुसारम् अद्यपर्यन्तं केनापि देवः न दृष्टः । अतः देवः नास्ति इति सिद्धम्'' इति प्रत्युक्तवान् सीतापतिः ।

''देवः अस्ति इति अङ्गीकरणेन बहूनि प्रयोजनानि सन्ति । किन्तु श्वेतकाकः अस्ति इति अङ्गीकरणेन कोऽपि लाभः नास्ति'' इति उक्तवान् सिद्धरामः ।

तत् श्रुत्वा किञ्चित् हसन् - ''सत्यशोधनसमये प्रयोजनस्य चिन्ता कुतः ? अहं तर्कशास्त्रानुसारं श्वेतकाकाः सन्ति इति साधयामि, शृणोतु'' इति उक्तवान् सीतापतिः ।

सिद्धरामः कुतूहलेन अङ्गीकारपूर्वकं शिरः चालितवान् । तदा सीतापतिः किञ्चित् कासित्वा ध्वनिं सम्यक् कृत्वा - ''सर्वे जीविनः भगवतः स्वरूपाः इति भवता एव उक्तम् । मनुष्येषु श्वेताः कृष्णाः च सन्ति, शुनकेषु अपि सन्ति, गोषु अपि सन्ति । अतः काकेषु कुतः न भवेयुः'' इति उक्तवान् ।

'भवेयुः' इति उक्तवान् सिद्धरामः ।

तर्हि ''श्वेताः काकाः न भवन्ति इति भवतः वचनं दोषपूर्णम् इति सिद्धं खलु ?'' इति पृष्टवान् सीतापतिः ।

'भवेत्' इति उक्तवान् सिद्धरामः ।

''दृष्टं वा श्रीमन् ! तर्कशास्त्रेण मम वचनं युक्तम् इति अहं साधितवान् अस्मि । किन्तु भवता उक्तं सत्यम् इति समर्थयितुं भवान् न समर्थः'' इति सीतारामः उक्तवान् ।

तदा सिद्धरामः हसन् उक्तवान् - ''वत्स ! वृथा वादः कुतः ? कोऽपि सन्देहः अस्ति चेत् पृच्छतु । वदामि'' इति ।

तदा सीतापतिः - ''रामायणस्य कथाश्रवणेन मम भासते यत् रावणः एव रामस्य अपेक्षया श्रेष्ठः इति'' इति उक्तवान् ।

"स्वस्वगुणानुसारं तथा भासते" इति उक्तवान् सिद्धरामः।

"अत्र गुणस्य प्रसक्तिरेव नास्ति श्रीमन्! यदि भवान् श्रोतुम् इच्छति तर्हि अहं तर्कशास्त्रानुसारेण सर्वं साधयामि" इति उक्तवान् सीतापतिः।

तस्य तर्कं श्रोतुं कुतूहलेन उपविष्टवान् सिद्धरामः। तदा सीतापतिः उक्तवान् - "वाल्मीकिः श्रीरामस्य परमभक्तः। रामायणं सः एव लिखितवान्। अतः सः रामं नायकः इति, तस्य शत्रुं रावणं दुष्टः इति च वर्णितवान्। मम विचारः असाधुः न खलु?" इति।

"असाधुः इति न वदामि। किन्तु मम एकः प्रश्नः - रामस्य एव भक्ताः सन्तिः, रावणस्य कुतः न सन्ति इति" इति उक्तवान् सिद्धरामः।

"रावणस्य अपि भक्ताः भवन्ति स्म। किन्तु युद्धे ये जयं प्राप्नुवन्ति ते एव लोके श्रेष्ठाः भवन्ति खलु। रामः अपि बहु अन्याय्यं कृत्वा एव रावणं हतवान्। पश्चात् वाल्मीकिद्वारा स्वकथां रचयित्वा महान्तं प्रचारं प्राप्तवान् अस्ति" इति उक्तवान् सीतापतिः।

सिद्धरामः हसित्वा - "भवान् महान् बुद्धिमान्" इति उक्तवान्।

तत् श्रुत्वा सीतापतिः अनुक्षणम् उक्तवान् - "भवान् मां बुद्धिमन्तम् अङ्गीकृतवान्। किन्तु एतस्य ग्रामस्य जनाः मां बुद्धिमन्तं न मन्यन्ते। अतः मम विषयं



भवान् सर्वेषां पुरतः वदतु" इति।

"तथैव भवतु, श्वः मम भाषणसमये भवन्तम् आह्वयामि। श्वेतकाकस्य विषये, रामायणस्य विषये च भवान् यद्यत् जानाति तत् वदतु। भवता उक्तम् अयुक्तम् इति कोऽपि वादं करोति वा इति पश्याम" इति उक्तवान् सिद्धरामः।

अनन्तरदिने सभायां सीतापतिः स्वयं वक्तव्यं सर्वम् उक्तवान्। ततः सिद्धरामः उक्तवान् - "सीतापतिना उक्तं कोऽपि खण्डयितुम् इच्छति चेत् अग्रे आगच्छतु" इति।

एकोऽपि अग्रे न आगतः। तदा ग्रामाधिकारी उत्थाय - "तदर्थं भवान् एव योग्यः इति अस्माकम् अभिप्रायः" इति

सिद्धरामम् उक्तवान्।

तत् श्रुत्वा सीतापतिः बहु सन्तुष्टः। 'ग्रामस्थः एकोऽपि मां खण्डयितुं न समर्थः अस्ति। सिद्धरामः तु पूर्वमेव पराजयम् अङ्गीकृतवान् अस्ति इति कारणेन एषः सर्वेषां पुरतः मां बुद्धिमन्तं घोषयति' इति चिन्तयन् आसीत्।

तदा सिद्धरामः उक्तवान् - "पूर्वं शीतलारोगः आगच्छति चेत् देव्यै प्राणिबलिं यच्छन्ति स्म। केचन बुद्धिमन्तः तत् न युक्तमिति युक्तिपूर्वकं निराकृत्य शीतलारोगस्य योग्यां चिकित्सां अन्विष्टवन्तः। एकस्मिन् काले भूमिः समतला अस्ति इति जनाः विश्वसन्ति स्म। केचन बुद्धिमन्तः तत् न समीचीनम् इति उक्तवन्तः। तेन खगोलशास्त्रसम्बद्धानि बहूनि गणितानि ज्ञातानि। बुद्धिमन्तः यत्किमपि वदन्तु - तत्र किञ्चित् वैचित्र्यं तु भवति एव। किन्तु तेन जनानां महान् उपकारः अपि भवति" इति।

एतानि वचनानि श्रुत्वा सीतापतेः अभिमानः अधिकः जातः। सः गर्वेण सर्वान् जनान् दृष्टवान्। सिद्धरामः यत् वदति तत् श्रद्धया शृण्वन्तः आसन् ग्रामस्थाः। तदा सिद्धरामः अग्रे उक्तवान् - "बुद्धिमतां विचाराः सर्वैः जनैः अङ्गीकृताः न भवन्ति। अतः जनाः तान् मूर्खान् भावयन्ति। सीतापतिः अपि तादृशः एव इति मम विश्वासः। तस्य विचारैः समाजस्य उपयोगः अस्ति इति अग्रे कदाचित् सिद्धं भवेत्। तावत्पर्यन्तं तु अस्माभिः एषः मूर्खः इति अनिवार्यतया भावनीयम्" इति।

तत् श्रुत्वा ग्रामस्थाः सर्वे उच्चैः हसितवन्तः। तदा सीतापतिः कोपेन - "मां मूर्खं भावयन्ति चेत् न अलम्। यदि धैर्यं स्यात् तर्हि तर्केण मां खण्डयन्तु" इति उक्तवान्।

तदा सिद्धरामः मन्दं हसन् उक्तवान् - "मूर्खैः सह वादस्य अकरणमेव बुद्धिमतः लक्षणम्" इति।

तत् श्रुत्वा ग्रामस्थाः पुनः उच्चैः हसितवन्तः। सीतापतेः महती लज्जा अभवत्।





# महाभारतम्

द्रुपदेन प्रेषितः ब्राह्मणः पाण्डवानां समीपम् आगत्य उक्तवान् - ''भवतां नामकुलगोत्रादिकं ज्ञात्वा आगच्छतु इति अस्माकं राज्ञा द्रुपदेन अहं प्रेषितः अस्मि । द्रुपदः पाण्डुराजस्य स्नेहितः आसीत् । स्वपुत्री अर्जुनाय दातव्या इति तस्य आशयः आसीत् । भवतां कुलगोत्रादिकं च उक्त्वा तोषयन्तु कृपया'' इति ।

एतत् श्रुत्वा युधिष्ठिरः ब्राह्मणं यथोचितं सत्कृत्य उक्तवान् - ''अस्माकं कुलगोत्रादिकं ज्ञात्वा भवतः राजा किं करिष्यति ? 'मत्स्ययन्त्रस्य भेदनं येन महावीरेण क्रियते, तस्मै पुत्री दीयते' इति तेन उक्तम् आसीत् । मम अनुजः मत्स्ययन्त्रभेदनस्पर्धायां जयं प्राप्य द्रौपदीं जितवान् अस्ति । एतस्मात् भवतः राज्ञः आशयः पूरितः इति अहं भावयामि'' इति ।

अत्रान्तरे पाण्डवानाम् आनयनार्थं द्रुपदेन प्रेषिताः रथाः आगताः । पाण्डवाः रथेषु उपविष्टवन्तः । कुन्ती द्रौपदी च एकस्मिन् रथे उपविष्टवत्यौ । अनन्तरं रथाः राजभवनं प्रति गताः । द्रुपदः पाण्डवेभ्यः बहूनि उपायनानि प्रेषितवान् आसीत् । तेषु क्षत्रियैः स्वीकर्तुं योग्यानि उपायनानि केवलं स्वीकृतानि पाण्डवैः । अनन्तरं द्रुपदः पाण्डवान् प्रत्यक्षं दृष्ट्वा चिन्तितवान् यत् - एते क्षत्रियाः एव इति ।

कस्मिंश्चित् मण्डपे सर्वे सम्मिलितवन्तः । तदा द्रुपदः युधिष्ठिरम् उद्दिश्य उक्तवान् - ''स्वामिन् ! भवन्तः के इति अहं न



जानामि। भवतां परिचयः भवति चेत् अहं शास्त्ररीत्या मम पुत्र्याः विवाहं निर्वर्तयितुम् इच्छामि'' इति।

तदा युधिष्ठिरः आत्मनः परिचयम् उक्तवान्। 'द्रौपदीं जितवान् अर्जुनः एव' इति ज्ञातवतः द्रुपदस्य नेत्राभ्याम् आनन्दाश्रूणि पतितानि। सः उक्तवान् - ''लाक्षागृहात् भवन्तः रक्षिताः इति यत्, तत् मम भाग्यम् एव। राज्ये भवतां यः भागः अस्ति, तस्य सम्पादनार्थम् अहं साहाय्यं करिष्यामि'' इति।

कुन्तीदेव्याः पाण्डवानां च वासार्थं सुन्दरं भवनं निर्मितम् अभवत्। तस्मिन् भवने ते सुखेन कालं यापयन्ति स्म।

कानिचन दिनानि अतीतानि। द्रुपदः पाण्डवैः सह समालोच्य तान् उक्तवान् - ''कस्मिंश्चित् शुभमुहूर्ते अर्जुनेन सह द्रौपद्याः विवाहं निर्वर्तयिष्यामि'' इति।

एतत् श्रुत्वा युधिष्ठिरः - ''अहं भीमः च अर्जुनस्य ज्येष्ठौ सहोदरौ अविवाहितौ च। एवं सति अर्जुनस्य विवाहः कथं सम्भवेत् ?'' इति पृष्टवान्।

''एवं तर्हि द्रौपदीं भवान् एव परिणयतु'' इति युधिष्ठिरम् उक्तवान् द्रुपदः।

तदा युधिष्ठिरः उक्तवान् - ''भवतः पुत्री रत्नतुल्या अस्ति। रत्नं सर्वैः स्वीकर्तुं शक्यते। अपि च मम मातुः मुखात् अकस्मात् निस्सृतस्य वचनस्य अनुसारं वयं पञ्च जनाः अपि तां परिणेष्यामः'' इति।

एतत् श्रुत्वा आश्चर्यचकितः द्रुपदः - ''कस्यचित् पुरुषस्य बहुपत्नीत्वं युज्यते। किन्तु कस्याश्चित् स्त्रियः बहुपतित्वं किम् उचितं भवति ? एतद्विषये कुन्तीदेव्या धृष्टद्युम्नेन च सह आवां श्वः चिन्तयाव'' इति उक्त्वा तस्य दिनस्य सभाकार्यक्रमं समापयितुम् उद्युक्तः।

तावता हरिणाजिनवेषधारी कृष्णद्वैपायनः तत्र आगतवान्। सभासदः सर्वे तं सादरं स्वागतीकृत्य पीठे उपवेशितवन्तः।

अनन्तरं द्रुपदः कृष्णद्वैपायनम् उद्दिश्य - ''महात्मन्! धर्मज्ञानी एषः युधिष्ठिरः वदन् अस्ति यत् - वयं पञ्च जनाः अपि द्रौपदीं परिणेष्यामः इति। भवान् तु धर्मसूक्ष्मान् जानाति। बहुभिः पुरुषैः काचित् एका एव

परिणीता इति कुत्रापि इतिहासे अस्ति वा ?'' इति पृष्टवान् ।

अनुक्षणं युधिष्ठिरः द्रुपदस्य सन्देहं परिहर्तुम् इच्छन् उक्तवान् - ''कदापि अधर्मयुक्तानि वचनानि मम मुखात् न निस्सरन्ति । भवान् निश्चिन्ततया अस्माभिः पञ्चपाण्डवैः सह द्रौपद्याः विवाहं निर्वर्तयितुम् अर्हति । अपि च पञ्चभिः अपि द्रौपदी परिणेतव्या इति मम मात्रा आज्ञप्ताः स्मः वयम् । मातृवाक्यपरिपालनम् एव श्रेष्ठः धर्मः खलु ! अपि च इतिहासस्य अवलोकनेन अपि ज्ञायते - 'गौतमवंशे जातायाः जटिलानामिकायाः मुनिकन्यायाः सप्त पतयः आसन् । दाक्षायणीनामिकायाः मुनिकन्यायाः प्रचेतनादयः दश पतयः आसन्' इति । इतोऽपि कानिचन निदर्शनानि दृश्यन्ते अस्माकं पुराणेषु । अतः एतद्विषये अलम् अधिकचिन्तनेन'' इति ।



तदा धृष्टद्युम्नः उत्थाय सर्वान् पश्यन् उक्तवान्- ''अनुजः अर्जुनः स्वपराक्रमेण द्रौपदीं जितवान् अस्ति । एवं सति अग्रजः युधिष्ठिरः कथं तां परिणेतुम् अर्हति ? अपि च सा पञ्चानां पत्नी कथं भवति ?'' इति आक्षेपं प्रकटीकृतवान् ।

किन्तु एतं वादं कुन्ती न अङ्गीकृतवती । अपि च सा 'मम मुखात् निस्सृतं वचनं कदापि अनृतं न भवेत्' इति अनुरोधपूर्वकम् उक्तवती ।

तदा महात्मा कृष्णद्वैपायनः कुन्तीं धैर्यवचनानि उक्त्वा द्रुपदम् उद्दिश्य उक्तवान् - ''राजन् ! युधिष्ठिरेण युक्तम् एव उक्तम् । अत्र अधर्मः कोऽपि नास्ति । कुन्त्याः आशयः अपि युक्तः एव । अतः एतैः पञ्चपाण्डवैः सह निरातङ्कं पुत्र्याः विवाहं निर्वर्तयतु भवान्'' इति ।

अनन्तरं कृष्णद्वैपायनः द्रुपदम् एकान्तस्थलं नीत्वा द्रौपद्याः पूर्वजन्म-वृत्तान्तम् उक्तवान् - ''पूर्वं मौद्गल्यनामकस्य मुनिवर्यस्य इन्द्रसेनानामिका पत्नी आसीत् । मौद्गल्यः कुष्ठरोगेण पीडितः अभवत् । अतः इन्द्रसेना पतिसुखं न प्राप्तवती । पतिम् एव ध्यायन्ती सा मरणं प्राप्तवती । अग्रिमजन्मनि सा काशीराजस्य पुत्रीरूपेण जन्म प्राप्तवती । काशीराजस्य पुत्री यद्यपि अतीव सुन्दरी आसीत्, तथापि सा पतिं न प्राप्तवती ।



तस्मात् अतीव दुःखिता सा शिवम् उद्दिश्य तपः कृतवती। तस्याः तपसा सन्तुष्टः शिवः प्रत्यक्षीभूय ताम् उक्तवान् - 'भवती यत् इच्छति तत् पृच्छतु' इति। शिवस्य दर्शनात् अतीव सन्तुष्टा सा 'पतिः' इति पञ्चवारम् उक्तवती। 'अग्रिमजन्मनि भवती पञ्च पतीन् प्राप्स्यति' इति ताम् अनुगृहीतवान् शिवः। 'यदि पञ्च पतयः भविष्यन्ति, तर्हि अहं पञ्चपतीनाम् अपि सेवां समानरीत्या यथा कुर्याम्, सर्वान् अपि समानरीत्या यथा तोषयेयं तथा माम् अनुगृह्णातु कृपया' इति महेश्वरं प्रार्थितवती काशीराजस्य पुत्री। शिवः तथैव ताम् अनुगृहीतवान्। सा एव अस्मिन् जन्मनि द्रौपदीरूपेण जन्म प्राप्तवती अस्ति। सा महेश्वरस्य वचनानुसारम् इदानीं पञ्चपाण्डवानां पत्नी भविष्यति'' इति।

कृष्णद्वैपायनः एतावत् उक्त्वा पुनः द्रुपदम् उद्दिश्य उक्तवान् - ''पूर्वकाले अपि एतादृशः विवाहः भवति स्म। नितन्तुनामकस्य राजर्षेः अतिसार-साल्व-शूरसेन-सारनामकाः पञ्च पुत्राः आसन्। परस्परं स्नेहभावेन वसन्तः एते पञ्च जनाः उशीनरराजकुमारीम् अजितां परिणीय सुखेन वसन्तः अपत्यानि प्राप्तवन्तः। अतः एतादृशः सम्प्रदायः पूर्वतनकाले अपि आसीत् एव'' इति।

कृष्णद्वैपायनस्य एतत् वचनं श्रुतवतः द्रुपदस्य सन्देहाः परिहृताः अभवन्। पञ्चभिः पाण्डवैः सह अपि पुत्र्याः द्रौपद्याः विवाहं सः अङ्गीकृतवान्।

तस्मिन् दिने एव उत्तमः मुहूर्तः आसीत्। अतः कृष्णद्वैपायनः स्वाभिप्रायं प्रकटितवान् यत् - अद्य एव विवाहकरणं वरम् इति। द्रुपदः महता सन्तोषेण एतत् अङ्गीकृतवान्। तत्क्षणे एव विवाहार्थं सन्नाहम् आरब्धवान् सः।

काम्पिल्यनगरम् आम्रकदलीपर्णानां तोरणैः अलङ्कृतम् अभवत्। सर्वेषां गृहाणां पुरतः सुगन्धयुक्तजलेन प्रक्षाल्य रङ्गवल्ली लिखिता अभवत्। समग्रं नगरं वैभवेन अलङ्कृतम् अभवत्। आगतेषु जनेषु आनन्दतरङ्गाः उत्पन्नाः। सर्वत्र पुष्पमालाः दृश्यन्ते स्म। ईशान्यदिशि द्रुपदस्य यत् राजभवनम् आसीत्, तत्र विवाहमण्डपः निर्मितः, सुन्दरतया अलङ्कृतः च। मण्डपस्य

स्तम्भाः हरिद्वर्णवस्त्रैः आवृताः आसन् । वस्त्राणां मध्यभागेषु पुष्पमालाः मणिमालाः च यथा लम्बमानाः स्युः तथा योजिताः । पार्श्वे अग्निकुण्डः अपि निर्मितः । सुवर्णपात्रेषु गङ्गाजलम् आनीय स्थापितम् ।

पञ्च पाण्डवाः मङ्गलस्नानं कृत्वा शुभ्रवस्त्राणि धृत्वा विवाहमण्डपसमीपम् आगतवन्तः । द्रौपदी अपि उत्तमानि वस्त्राणि, आभरणानि च धृत्वा सखीभिः सह तत्र आगतवती ।

पुण्याहवाचनानन्तरं धौम्यः द्रौपदीं युधिष्ठिरं च विवाहपीठे उपवेश्य होमं कारितवान्, शास्त्ररीत्या तयोः विवाहविधिं कारितवान् च । यथा द्रौपदीयुधिष्ठिरयोः पाणिग्रहणं प्रवृत्तं, तथैव भीमार्जुननकुलसहदेवैः सह अपि द्रौपद्याः पाणिग्रहणकार्यक्रमः प्रवृत्तः ।

द्रुपदः स्वजामातृभ्यः विविधानि अमूल्यानि आभरणानि, धनानि, रथान्, अश्वान्, गजान्, धेनूः, दासीः च उपायनरूपेण दत्तवान् । द्रुपदः चिन्तितवान् यत् - पाण्डवाः जामातरः इत्यतः इतःपरं देवताः अपि मम क्लेशं जनयितुं न शक्नुवन्ति इति ।

विवाहकार्यक्रमः समाप्तः । अनन्तरं द्रौपदी अन्तःपुरं प्रति गत्वा तत्र स्त्रीणां मध्ये उत्तमासने उपविष्टवत्याः कुन्तीदेव्याः समीपं गत्वा तां साष्टाङ्गं नमस्कृतवती । स्नुषां द्रौपदीं दृष्ट्वा अतीव सन्तुष्टा कुन्ती प्रीत्या ताम् आलिङ्ग्य हितवचनानि बोधयित्वा ताम्



आशिषा अनुगृहीतवती ।

पाण्डवाः द्रौपदीं परिणीतवन्तः इति वार्तां ज्ञात्वा नितरां सन्तुष्टः कृष्णः पाण्डवेभ्यः मूल्ययुतानि विविधानि उपायनानि आनीय दत्तवान् । अनन्तरं पाण्डवाः कृष्णेन सह काम्पिल्यनगरे एव सुखेन वासम् आरब्धवन्तः ।

'द्रौपदीस्वयंवरदिने मत्स्ययन्त्रभेदनं कृत्वा कर्णेन सह युद्धं कृतवान् अर्जुनः एव । शल्यं पराजितवान् भीमः एव । पाण्डवाः लाक्षागृहे न दग्धाः, अपि तु तस्मात् अपायात् ते कथमपि स्वप्राणान् संरक्ष्य कुन्त्या सह जीवन्तः सन्ति' इति विषयः सर्वैः राजकुमारैः ज्ञातः । स्वयंवरकार्यक्रमं समाप्य हस्तिनापुरं प्रति गच्छता अपि अयं विषयः

ज्ञातः। पाण्डवानां सौभाग्यं दृष्ट्वा सः ईर्ष्यया द्वेषेण च तप्तः अभवत्।

तदा दुःशासनः अग्रजम् उद्दिश्य - "पाण्डवाः यदि ब्राह्मणवेषं धृत्वा आगताः न स्युः, तर्हि द्रौपदी तेषां हस्तगता न अभविष्यत्, अपि तु अस्माभिः एव द्रौपदी प्राप्ता अभविष्यत्। मत्स्ययन्त्रभेत्ता अर्जुनः इति ज्ञातं चेत् किं वयं मौनम् अस्थास्याम ? इदानीं चिन्ताकरणेन कः लाभः ? पाण्डवानां दैवबलम् एव महत् अस्ति" इति उक्तवान्।

एवं दुःशासनः दुर्योधनः च अतीतस्य विषये चिन्तयन्तौ लाक्षागृहदहनार्थं प्रेषितं पुरोचनं निन्दन्तौ स्वदौर्भाग्यं स्मरन्तौ हस्तिनापुरं प्राप्तवन्तौ।

प्रवृत्तं सर्वं ज्ञात्वा विदुरः अतीव सन्तुष्टः। सः धृतराष्ट्रस्य समीपं गत्वा स्वयंवरविचारान् सर्वान् विस्तरेण तं निवेदितवान्।

एतत् श्रुत्वा धृतराष्ट्रः - 'द्रौपदी स्वपुत्रं दुर्योधनम् अङ्गीकृतवती' इति मत्वा महता सन्तोषेण विदुरम् उक्तवान् - "द्रौपद्यै विविधानि रत्नाभरणानि वस्त्राणि च प्रेषयतु। अपि च तां हस्तिनापुरं प्रति आनाययतु" इति।

'स्वकीयं वचनम् अन्यथा गृहीतवान् धृतराष्ट्रः' इति ज्ञात्वा विदुरः पुनः उक्तवान् - "द्रौपद्या विवाहार्थम् अङ्गीकृतः अर्जुनः, न तु दुर्योधनः। अपि च पञ्च पाण्डवाः अपि द्रौपदीं परिणीतवन्तः सन्ति" इति।

तदा धृतराष्ट्रः उक्तवान् - "शुभवार्ता एव उक्ता भवता। वस्तुतः दुर्योधनस्य अपेक्षया पाण्डवेषु एव मम अधिका प्रीतिः। यतः पाण्डवाः महापराक्रमशीलाः। ते श्रद्धया ज्येष्ठानां सेवां कुर्वन्ति। शक्तियुक्तीनां प्रयोगं ते सम्यक् जानन्ति। इदानीं तु द्रुपदस्य स्नेहं सम्पाद्य ते पूर्वापेक्षया अपि दृढाः जाताः। ते न मृताः इत्यतः अहम् अतीव सन्तुष्टः अस्मि" इति।

"राजन् ! चिन्तनं सदा एतादृशम् उत्तमचिन्तनम् एव भवतु भवतः" इति उक्तवान् विदुरः।



# 'चल्ला'नामकाः वृक्षाः

पूर्वं चीनादेशस्य काण्टन्प्रदेशस्य जनाः तत्रत्यं कञ्चित् कविं बहिष्कृतवन्तः । काण्टन्प्रदेशात् बहिः वासं कुर्वते तस्मै कवये प्रतिदिनं तत्रत्याः जनाः आहारेण सह फलानि अपि यच्छन्ति स्म । "एवमेव प्रतिदिनम् अपि यदि फलानि दीयन्ते, तर्हि आमरणम् अपि दण्डनम् अनुभोक्तुं सिद्धः अहम्" इति उक्तवान् सः कविः इति प्रतीतिः । बौद्धानां काले एषः वृक्षः चीनातः अस्माकं देशं प्रति आनीतः इति श्रूयते । बिहारराज्यस्य मुजाफरमण्डले, पश्चिमबङ्गालस्य हुग्लीमण्डले, उत्तरप्रदेशस्य डेहराडून्मध्ये, पञ्जाबस्य गुरुदासपुरे, तमिळुनाडुराज्यस्य नीलगिरिमण्डले च वाटिकासु एते वृक्षाः वर्ध्यन्ते । एतस्मिन् कृषिकार्ये अस्माकं देशः प्रपञ्चस्तरे तृतीयं स्थानं प्राप्तवान् अस्ति ।



सदा हरितायमानाः एते वृक्षाः १२ मीटर् उन्नताः भवन्ति । एतस्य शाखाः प्रसृताः भवन्ति, शाखानाम् अग्रभागे लघ्वाकारकाणि पुष्पाणि गुच्छरूपेण भवन्ति । एतस्य शलाटवः अण्डाकारेण भवन्ति । पक्वताकाले रक्तवर्णीयानि भवन्ति । कानिचन फलानि हरिन्मिश्रित-रक्तवर्णीयानि भवन्ति । एतस्य त्वक् रूक्षा भवति । अन्तः बीजानि परितः मधुररसयुक्तः मृदुः सारः भवति । एषः सारः बि.सि.हि. जीवसत्त्वयुक्तः भवति ।

उत्तरभारते मे-जून्मासयोः, दक्षिणभारते एप्रिल्-मे-मासयोः च एते वृक्षाः फलन्ति ।

न केवलम् एतस्य बीजानि, अपि तु एतस्य त्वक्, पुष्पाणि च औषधगुणयुक्तानि भवन्ति ।

अस्माकं देशस्य ऋषयः - ६

# भृगुः

अस्माकं देशीयानां केषाञ्चन वंशनामानि सुप्रसिद्धानाम् ऋषीणां नामसम्बन्धीनि भवन्ति । भृगुवंशसम्बद्धाः भार्गवाः इत्युच्यन्ते ।

भृगुः पुराणकालीनः प्रख्यातः मुनिः । सः मुनिश्रेष्ठः पूजार्हं देवम् अन्विष्य सामान्यजनेभ्यः परिचायितवान् ।

कदाचित् भृगुः विष्णोः दर्शनार्थं वैकुण्ठं गतवान् । तस्मिन् समये महाविष्णुः योगनिद्रायाम् आसीत् । भृगुः कञ्चित् कालं यावत् तत्रैव उपविष्टवान् । किन्तु विष्णुः निद्रातः न जागरितः । महातपश्शक्तियुक्तं मुनिश्रेष्ठम् आत्मानं सगौरवं न स्वागतीकृतवान् विष्णुः इति चिन्तयतः भृगोः विवेकः नष्टः जातः । स्थितिकर्तुः विष्णोः एतावती निद्रा चेत् जगतः का गतिः ? इति वदन् भृगुः विष्णुं वक्षःस्थले पादेन प्रहृतवान् ।

जितेन्द्रियः मुनिः अपि भृगुः क्षणकालं अविवेकेन व्यवहृतवान् ।

भृगोः पादप्रहारेण विष्णुः जागरितः । किन्तु सः न कुपितः । अपि तु आत्मना अतिथिसत्कारः न कृतः इत्यतः सः भृगोः क्षमां याचितवान् । वक्षःस्थले कृतेन आघातेन भृगोः पादवेदना जाता स्यात् इति विष्णुः भृगोः पादमर्दनं कृतवान् । विष्णोः शान्तगुणं विनयस्वभावं च दृष्ट्वा भृगुः आश्चर्यचकितः । अविवेकेन व्यवहृतवतः आत्मनः व्यवहारात् अतीव पश्चात्तापम् अनुभूतवान् सः । शान्तस्वरूपः महाविष्णुः पूजार्हः, जननमरणाभ्यां मुक्तिदाता मोक्षदाता इति च मुनीन् बोधितवान् भृगुः ।

यदि अग्नये आहुतिः दीयते, तर्हि मलिनवस्तूनि अपि निर्मलानि भवेयुः इति भृगुः उक्तवान् । मानवानां भूत-भविष्यद्-वर्तमानबोधकः 'भृगुसंहिता' नामकः कश्चित् ज्योतिषग्रन्थः अस्ति । एषः ग्रन्थः भृगोः ज्योतिषपाण्डित्यं निरूपयति । च्यवनः, शुक्रः, जमदग्निः, परशुरामः, वाल्मीकिः इत्यादयः प्रख्यातमुनयः भार्गववंशीयाः एव ।



# भवन्तः जानन्ति वा ?

१. अशोकमहाराजः स्वप्रथमशासनं कदा आरब्धवान् ?
२. कः देशः पेगोडाल(आलयः)देशः इत्युच्यते ?
३. आसियावन्यगर्दभाः अस्माकं देशस्य कस्मिन् प्रदेशे सन्ति ?
४. अमेरिकादेशस्य प्रधानौ द्वौ राजकीयपक्षौ कौ ?
५. सा क्रिकेट्स्पर्धा कदा प्रवृत्ता, यस्यां च भारतदेशस्य चत्वारः क्रीडापटवः एकस्य धावनस्य(रन्)सम्पादनात् पूर्वम् एव बाह्याः जाताः ?
६. पक्षरहितः पक्षी कः ?
७. सा भारतीयमहिला का, या च संयुक्तराज्यसमितेः जनरल् असेम्ब्लीनिमित्तं प्रथमाध्यक्षात्वेन चिता ?
८. पादकन्दुकक्रीडायां ऐदम्प्राथम्येन १००० गोल्स् केन साधितानि ?
९. चोलानां राजधानी का आसीत् ?
१०. अस्माकं देशे आङ्ग्लेयानां फ्रेञ्चजनानां च मध्ये सप्त वर्षाणि यावत् युद्धं प्राचलत् । तस्य युद्धस्य नाम किम् ?
११. गजनीमहम्मद्वर्यः कदा अस्माकं देशस्य उपरि आक्रमणं कृतवान् ?
१२. भारतदेशस्य तत् राज्यं किं, यस्मिन् लोकसभासदस्याः अधिकाः सन्ति ?
१३. ताजमहल्समीपे प्रवहन्त्याः नद्याः नाम किम् ?
१४. आग्रासमीपस्थं फतेपुर् सिक्रीनगरं केन निर्मितम् ?
१५. द्वितीयचन्द्रगुप्तस्य प्रसिद्धं नामधेयं किम् ?
१६. बृहदाकारकः मांसाहारी प्राणी कः ?
१७. 'पोलोक्लब्स्' प्रथमतया कुत्र स्थापितानि अभवन् ?
१८. सः आक्रमणकारः कः, यश्च ऐदम्प्राथम्येन अस्माकं देशे स्फोटकास्त्रं प्रवेशितवान् ?

## उत्तराणि

१. क्रि.पू. २१६ तमे वर्षे ।
२. बर्मादेशः (मियान्मार्) ।
३. गुजरात्राज्यस्य कच्छप्रदेशे ।
४. डेमोक्राटिक्पक्षः, रिपब्लिकन्पक्षः च ।
५. १९५२ तमे वर्षे । इङ्ग्लेण्ड्देशेन सह
६. न्यूजिल्याण्ड्देशस्य 'किवी' नामकः पक्षी ।
७. विजयलक्ष्मी पण्डित् ।
८. आस्ट्रियादेशे जन्म प्राप्य जर्मनीपक्षतया क्रीडितवता फ्राञ्ज्बेण्डर्वर्येण ।
९. तञ्जावूरु ।
१०. कर्णाटकयुद्धम् ।
११. क्रि.श. १०००-१०२६ वर्षाणां मध्यभागे सामान्यतः पञ्चदशवारम् ।
१२. उत्तरप्रदेशः ।
१३. यमुनानदी ।
१४. अक्बर्महाशयेन ।
१५. विक्रमादित्यः ।
१६. पोलार् भल्लूकः ।
१७. आस्सामराज्ये ।
१८. बाबरः ।

# उभौ अलसौ

**सो**मपुरस्य सोमनाथः भीमनाथः च आत्मीयौ स्नेहितौ । किन्तु उभौ अपि परिश्रमेण कार्यकरणं न इच्छतः । तौ अतीव अलसौ आस्ताम् । तद्ग्रामीणानां सर्वेषाम् अपि एतयोः स्वभावपरिचयः आसीत् इत्यतः तौ पार्श्वग्रामं गत्वा यत्र शुभकार्याणि प्रचलन्ति, तादृशं गृहं प्रविश्य आनन्देन भोजनं कुरुतः स्म ।

तौ उभौ अपि कदाचित् कञ्चित् ग्रामं गतवन्तौ । तयोः ग्रामप्राप्तिसमये मध्याह्नसमयः आसीत् । कस्माचित् गृहात् भोजनपत्राणां क्षेपणं ताभ्यां दृष्टम् ।

'हाँ, विवाहभोजनम्' इति वदन्तौ उभौ अपि महता आनन्देन तद्गृहं प्रविष्टवन्तौ । तस्मिन् समये जनाः भोजनार्थं भोजनपत्राणि भूमौ पङ्क्तिशः स्थापयन्तः आसन् । सोमनाथः भीमनाथः च भोजनार्थम् उपविष्टवन्तौ ।

भोजनपरिवेषकः सोमनाथं भीमनाथं च सन्देहेन पश्यन् - ''भवन्तौ कौ इति न ज्ञातं खलु !'' इति उक्तवान् ।

तदा सोमनाथः - ''अहं वध्वाः मातुलः'' इति उक्तवान् ।

''मम परिचयः नास्ति वा ? अहं वरस्य पितृव्यस्य ज्येष्ठजामाता'' इति उक्तवान् भीमनाथः ।

तदा भोजनपरिवेषकः उच्चस्वरेण अन्यान् उक्तवान् - ''एतौ चोरौ बहिः प्रेषयन्तु'' इति ।

चत्वारः कर्मकराः आगत्य सोमनाथं भीमनाथं च बहिः नीत्वा उपयुक्तानां भोजनपत्राणाम् उपरि एव क्षिप्तवन्तः ।

''सोमनाथ ! आवाभ्यां कुत्र दोषः आचरितः ?'' इति पृष्टवान् भीमनाथः शरीरे लग्नां धूलिं मार्जयन् ।

तदा सोमनाथः उत्तिष्ठन् उक्तवान् - ''आवां बहिः प्रेषितवतां दुष्टानां वचनं न श्रुतं वा भवता ? अत्र यः कार्यक्रमः प्रचलन् अस्ति सः न विवाहः, अपि तु एतद्गृहस्य स्वामिनः श्राद्धम्'' इति ।





# मातृपूजनमन्त्रः

पत्न्या ललितया सह निवसतः गोपालदासस्य आदर्शकुटुम्बम् । गोपालदास-ललितयोः चत्वारः पुत्राः । ज्येष्ठपुत्रः यदा विंशतिवर्षीयः जातः, तदा गोपालदासः केनचित् विचित्रेण रोगेण पीडितः सन् शय्याम् आश्रितवान् । तदा तस्य वयः चत्वारिंशत् वर्षाणि । पत्न्याः पञ्चत्रिंशत् वर्षाणि । बहवः वैद्याः आगत्य गोपालदासस्य परीक्षां कृतवन्तः । किन्तु तस्य रोगलक्षणं ज्ञातुं कोऽपि न शक्तः । कदाचित् हिमालयात् कश्चित् महानुभावः आगतवान् । सः गोपालदासं परीक्ष्य उक्तवान् - "एषः न रोगः, अपि तु पूर्वजन्मनि कृतस्य पापस्य फलम् । भवान् मया सह हिमालयम् आगत्य तपः करोतु । तेन भवान् पूर्णतया स्वस्थः भविष्यति" इति ।

"कियत्कालं मया हिमालये स्थातव्यम् ?" इति पृष्टवान् गोपालदासः ।

तदा महानुभावः उक्तवान् - "भवता गतजन्मनि उत्तमस्य कस्यचित् कुटुम्बस्य सदस्याः वियोजिताः । तदेव पापम् इदानीं भवन्तं पीडयत् अस्ति । एतस्य पापस्य परिहारार्थं भवता विंशतिं वर्षाणि यावत् हिमालये तपः करणीयम्" इति ।

एतत् श्रुत्वा गोपालदासस्य पत्नी ललिता महानुभावम् उद्दिश्य - "स्वामिन् ! मम आर्यपुत्रेण अस्मिन् जन्मनि अनवधानात् अपि किमपि पापकार्यं न आचरितम् । सः स्वकुटुम्बम् अत्यन्तं श्रद्धया पोषयन् अस्ति । बहूनाम् उपकारम् अपि कृतवान् अस्ति । तादृशः अस्मासु अतीव प्रीतियुक्तः एषः विंशतिं वर्षाणि यावत् अस्मान् त्यक्त्वा कथं वा दूरे स्थातुं शक्नुयात् ?" इति पृष्टवती ।

तदा महानुभावः उक्तवान् - "पूर्वजन्मनि कृतं पापं सुलभतया मानवं न



त्यजति । तस्मात् मानवेन प्रतिजन्म अपि पुण्यकार्यं करणीयम् । अस्मिन् जन्मनि कृतं पुण्यम् अग्रिमजन्मनि सहायकं भवति । अद्यपर्यन्तं भवत्याः कुटुम्बं सुखमयम् आसीत् इति यत्, तस्य कारणं भवत्याः पतिः न, अपि तु भवत्या कृतस्य पुण्यस्य प्रभावः'' इति ।

'एवमेव महावेदनायुक्तस्य जीवनस्य यापनं महते क्लेशाय । अतः हिमालयगमनम् एव वरम्' इति निर्णीतवान् गोपालदासः । किन्तु 'पत्नी मम अनुपस्थितौ पुत्रैः सह सुखेन जीवेत् वा ? पुत्राः विवाहानन्तरं मातुः योगक्षेमं पश्येयुः वा ? अपि च अद्यपर्यन्तं पत्नीपुत्राणां निमित्तं मया किमपि न सम्पादितं खलु' इति चिन्ता गोपालदासस्य ।

गोपालदासस्य चिन्ताम् अवगत्य महानुभावः क्षणकालं विचिन्त्य उक्तवान् - ''भवतः पत्नी सौभाग्यवती । अतः भवत्पुत्राः तां सम्यक् एव पालयिष्यन्ति । अतः भवता चिन्ता कर्तव्या नास्ति । तथापि भवतः चिन्ता न अपगता चेत् तस्याः निवारणार्थं कश्चन उपायः अस्ति'' इति ।

अनन्तरं महानुभावः गोपालदासस्य पत्नीं ललितां पुत्रान् च आहूय 'प्रमुखः कश्चन विचारः वक्तव्यः अस्ति । श्रद्धया शृण्वन्तु' इति उक्त्वा - ''गोपालदासस्य भवतां च इतःपरं विंशतिं वर्षाणि यावत् ऋणानुबन्धः न भविष्यति । एषः मया सह हिमालयम् आगमिष्यति । किन्तु इदानीं पत्न्याः ललितायाः विषये एतस्य महती चिन्ता आरब्धा अस्ति । यतः सा हिमालयं गन्तुं न शक्नोति । पुत्राणाम् अपि मातुः आवश्यकता अस्ति । अतः ललिता अत्रैव भविष्यति पुत्रैः सह'' इति उक्तवान् ।

ललिता आरम्भे एतं विचारं न अङ्गीकृतवती । किन्तु महानुभावेन गोपालदासस्य रोगः भयङ्करः इति यदा विवृतं, तदा सा अङ्गीकृतवती । अनन्तरं चत्वारः पुत्राः अपि एककण्ठेन पितरम् उक्तवन्तः - ''वयं मातरं सम्यक् पालयिष्यामः । भवान् निश्चिन्तः सन् हिमालयं गत्वा आगच्छतु'' इति ।

तदा महानुभावः तान् पुत्रान् उक्तवान् - ''इदानीम् अहं भवतः सर्वान् अपि

मातृमन्त्रम् उपदिशामि । भवद्भिः एतस्य मन्त्रस्य पठनपूर्वकं मातुः पूजा करणीया । कदापि तस्याः मनसः खेदः न करणीयः । तस्याः हितवचनं भवद्भिः श्रोतव्यम् । श्रद्धया पञ्चवर्षाणि यावत् मातुः सेवा क्रियते चेत् निधिप्राप्तिः भविष्यति । भवतु एतत् कार्यं कर्तुं यः सिद्धः तेन सह माता निवासं करिष्यति'' इति ।

एतत् श्रुत्वा गोपालदासस्य ज्येष्ठपुत्रः उक्तवान् - ''मातुः मनः विशालम् । तस्याः स्वार्थभावः न भवति । पुत्रस्य निमित्तं सा यत्किमपि कर्तुं सिद्धा भवति । तादृश्याः मातुः सेवा मम कष्टाय न भवति । अतः माता मया सह स्थास्यति'' इति ।

अन्ये अपि पुत्राः स्वकीयम् आशयं प्रकटितवन्तः यत् - माता स्वसमीपे एव तिष्ठतु इति ।

तदा महानुभावः क्षणं विचिन्त्य - ''मन्त्रपठनपूर्वकं दिने एकवारम् एव मातुः पूजा करणीया । अतः माता प्रथमं पञ्च वर्षाणि ज्येष्ठपुत्रेण सह स्थास्यति । अनन्तरं पञ्चवर्षाणि द्वितीयपुत्रेण सह स्थास्यति । एषा व्यवस्था भवद्भिः अनुमन्यते वा ?'' इति पृष्टवान् ।

''माता यथा इच्छति तथा भवतु'' इति एककण्ठेन उक्तवन्तः पुत्राः ।

एतत् श्रुत्वा महानुभावः ललिताम् उक्तवान् - ''अम्ब ! भवती भाग्यशालिनी अस्ति । भवत्याः पुत्राः रत्नसदृशाः'' इति ।

तथापि म्लानवदनां ललितां दृष्ट्वा



महानुभावः पुत्रान् बहिः सम्प्रेष्य तस्याः खेदस्य कारणं पृष्टवान् ।

तदा ललिता - ''स्वामिन् ! मम पुत्राः इतोऽपि बालाः । अतः मातृविषयिण्या प्रीत्या ते माम् अपि आदरेण पश्यन्ति । परस्परम् अपि स्नेहेन जीवन्ति । किन्तु ते यदा प्रौढाः भविष्यन्ति, तदा तेषां चिन्तने परिवर्तनं भवेत् । अपि च अस्माकं प्रभूता सम्पत्तिः अपि नास्ति । यदि अहं ज्येष्ठपुत्रेण सह निवासं करिष्यामि, तर्हि अन्यपुत्राणां का गतिः ?'' इति पृष्टवती ।

''अम्ब ! भवती चिन्तां मा करोतु । पञ्चवर्षपर्यन्तं तु भवत्याः ज्येष्ठपुत्रः भवत्याः वचनं पालयिष्यति एव । तस्मिन् समये अन्यान् त्रीन् पुत्रान् अपि भवती

आत्मना सह एव स्थापयतु । परस्परं स्नेहजीवनं पुत्रान् बोधयतु । स्वावलम्बिजीवनं तान् पाठयतु । पञ्चवर्षाणाम् अनन्तरं ज्येष्ठपुत्रः दशलक्षरूप्यकाणां निधिं प्राप्स्यति । एतस्मात् अन्ये पुत्राः अपि श्रद्धया भवत्याः सेवां करिष्यन्ति'' इति उक्तवान् महानुभावः।

एतत् श्रुत्वा ललिता उक्तवती - ''स्वामिन् ! भवतः कथनं युक्तम् एव। किन्तु भवतः कथनानुसारं मम ज्येष्ठपुत्रः तस्य पञ्चविंशतितमे वयसि दशलक्षरूप्यकाणि प्राप्स्यति। द्वितीयपुत्रः तस्य नवविंशतितमे वयसि निधिं प्राप्स्यति। चतुर्थः पुत्रस्तु तस्य सप्तत्रिंशत्तमे वयसि दशलक्षरूप्यकाणां निधिं प्राप्स्यति। एतत् अन्याय्यं खलु !'' इति।

तदा महानुभावः मन्दहासपूर्वकम् उक्तवान् - ''भवती पुत्राणां भविष्यम् एव गम्भीरतया चिन्तयन्ती अस्ति। अतः एव एवं वदति भवती। पुत्राः मात्रा सह वसन्ति चेत् ते भाग्यशालिनः। धनप्राप्तिसमनन्तरं यदि ज्येष्ठपुत्रः भवतीं त्यक्त्वा गमिष्यति तर्हि तस्य अग्रिमदिनेषु मातुः सहवासभाग्यं न भविष्यति । तदा अन्ये पुत्राः तादृशम् अवकाशं प्राप्स्यन्ति। एतावता अन्ये पुत्राः दुरदृष्टवन्तः इति न चिन्तनीयम्!''

''स्वामिन् ! मम चत्वारः पुत्राः अपि युगपत् निधिं यथा प्राप्नुयुः तथा कर्तुं न शक्नोति वा भवान् ?'' इति पृष्टवती ललिता।

तदा महानुभावः क्षणकालं विचिन्त्य उक्तवान् - ''निधिप्राप्तिः भवत्याः पुत्राणाम् अधीना अस्ति। किन्तु इदानीं मया कृतायाः व्यवस्थायाः कारणतः पुत्राः श्रद्धया विंशति वर्षाणि यावत् भवत्याः सेवां करिष्यन्ति । तत् प्रधानम् । तस्मात् भवत्याः पतिः हिमालये निश्चिन्ततया स्थास्यति । विंशतिवर्षाणाम् अनन्तरं भवन्तः सर्वे पुनः मेलिष्यन्ति'' इति।

एतत् श्रुत्वः ललितायाः आतङ्कः अपगतः। अनन्तरं महानुभावः चतुरः पुत्रान् आहूय मातृपूजनमन्त्रम् उपदिष्टवान्।





# धर्मनगरम्

पूर्वं मिथिलानगरे यशोवर्धननामकः कश्चित् क्षत्रियकुमारः आसीत् । अत्यन्तं पराक्रमशीलः साहसशीलः च सः कोपशीलः अपि आसीत् । कस्मात् अपि भयरहितः सः स्वेच्छया सर्वत्र अटन् दुष्टकार्याणि कुर्वन् जीवनं यापयति स्म ।

लोके यानि यानि पापकार्याणि सन्ति, तानि सर्वाणि तेन क्रियन्ते स्म । यः कोऽपि यदि तं विरुध्य व्यवहरति, तर्हि तं स्वखवित्रेण मारयति स्म यशोवर्धनः ।

कानिचन वर्षाणि अतीतानि । यशोवर्धनेन क्रियमाणस्य पापकार्यस्य अन्त्यं सन्निहितम् । सः कदाचित् राज्ञः श्यालेन सह कलहम् आरब्धवान् । उभौ अपि खड्गं गृहीतवन्तौ । श्यालः यदा खड्गम् इतस्ततः चालयन् आसीत् तदा यशोवर्धनः श्यालम् उरसि खड्गेन घातितवान् ।

एतां वार्तां श्रुत्वा कुपितः राजा भटान् आज्ञापितवान् यत् - यशोवर्धनस्य शिरश्छेदनं क्रियताम् इति ।

एतस्मात् भीतः यशोवर्धनः - "इदानीं यदि प्राणाः रक्षणीयाः तर्हि एतस्मात् देशात् निर्गन्तव्यम्, अथवा मरणं प्राप्तव्यम् । अन्यः उपायः नास्ति" इति विचिन्त्य आत्मानं रक्षितुम् इच्छन् स्वकीयम् अश्वम् आरुह्य देशात् पलायितवान् । अश्वः शरवेगेन धावन् बहुदूरं गतवान् । किन्तु निरन्तरं महता वेगेन धावितवतः तस्य श्वासोच्छ्वासस्य अवरोधः अभवत् । तस्मात् अग्रे गन्तुम् अशक्नुवन् सः तत्रैव मृतः जातः ।

'इतोऽपि मया स्वदेशः अतिक्रान्तः न स्यात् । राजभटाः माम् अनुसरन्तः आगच्छन्तः स्युः' इति भयम् अनुभवन् यशोवर्धनः क्षुधां पिपासां च कथमपि सहमानः धावितवान् । आरात्रि अरण्यमार्गेण धावन् सः प्रातःकालसमये किञ्चन

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



पर्वतशिखरं प्राप्तवान् । तत्र सः कञ्चित् कालं विश्रम्य ततः उत्थितवान् । तदा तेन पर्वतस्य अपरस्मिन् पार्श्वे स्थिते खाते किञ्चन सुन्दरं नगरं दृष्टम् । तत् नगरं दृष्टवतः यशोवर्धनस्य प्राणाः आगताः इव । यतः तेन मिथिलानगरे तादृशं नगरं न दृष्टम् आसीत् एव ।

'एवं तर्हि एतत् अन्यत् राज्यम् । अत्र अहं विना भयं जीवितुं शक्नोमि' इति विचिन्त्य यशोवर्धनः पर्वतशिखरात् अवतीर्य अग्रे गतवान् । मध्येमार्गं कश्चित् मेषपालः दृष्टः । यशोवर्धनः तत् नगरं दर्शयन् मेषपालं पृष्टवान् - ''तस्य नगरस्य नाम किम् ?'' इति ।

'धर्मनगरम्' इति उक्तवान् मेषपालः ।

'नाम एव सूचयति यत् एतत् नगरं विचित्रम् इति' इति चिन्तयन् यशोवर्धनः तत् नगरं प्रविश्य विशालेन मार्गेण अग्रे गतवान् । मार्गे बहवः महिलाः पुरुषाः च सञ्चरन्ति स्म । केचन मार्गे स्थित्वा परस्परं वार्तालापं कुर्वन्ति स्म । तेषु कोऽपि अनारोग्यपीडितः न दृश्यते स्म । 'एतत् पुण्यनगरम् अस्ति । अत्र दुःखम् एव न दृश्यते' इति चिन्तयन् यशोवर्धनः कस्यचित् आपणस्य समीपं गतवान् । तदा तेन विचित्रः कश्चन अनुभवः अनुभूतः । आपणिकः ग्राहकैः सह यदा सम्भाषमाणः आसीत्, तदा कश्चित् युवकः तस्मात् आपणात् किमपि वस्तु चोरयित्वा किमपि अजानन् इव अभिनयन् ततः निर्गतवान् । सः पञ्चषाणि पदानि अग्रे गतवान् स्यात् । तावता महान् शब्दः श्रुतः । युवकेन यत्र स्थितम् आसीत्, तत्र भूमेः विच्छेदः जातः । युवकः भूमेः अन्तः पतितवान् । भूमिः क्षणाभ्यन्तरे यथापूर्वं संयुक्ता अभवत् । एतत् प्रत्यक्षं दृष्ट्वा यशोवर्धनः स्तम्भीभूतः ।

एतां घटनां तत्रत्याः अन्ये अपि दृष्टवन्तः । किन्तु ते यशोवर्धनः इव न आश्चर्यचकिताः । अपि तु ते क्षणं तत्र स्थित्वा ततः स्वकार्येषु मग्नाः अभवन् । 'एषः अतीव सामान्यविषयः इति एते चिन्तितवन्तः । अत्रत्यानां जनानां मरणम् एवंप्रकारेण एव भवति' इति यशोवर्धनः ज्ञातवान् ।

अनन्तरं सः अग्रे गतवान् । बहुषु स्थलेषु तेन एतादृशाः विचित्रघटनाः दृष्टाः । बहवः भूगर्भे लीनाः । किन्तु एकः अपि अपघातेन

अनारोग्येण वा न मृतः । कश्चित् यस्य कस्यापि द्रोहम् आचरति चेदपि अपरक्षणे एव भूमिः विच्छिन्ना सती तम् स्वगर्भं नयति स्म ।

कश्चित् कस्यचित् पृष्ठभागे छुरिकया घातयितुम् उद्युक्तः । तावता भूमिः विच्छिन्ना जाता । सः भूमेः अन्तः गतवान् । अपरत्र कुत्रचित् चत्वारः पुरुषाः काञ्चित् महिलां ग्रहीतुम् इच्छन्तः धावन्तः आगतवन्तः । तावता भूमिः विच्छिन्ना सती तान् चतुरः अपि अन्तः नीतवती ।

यशोवर्धनः एतादृशान् विचित्रमरण-प्रसङ्गान् दृष्ट्वा 'कृतम् अपराधं भूदेवी न क्षाम्यति इति जानन्तः अपि एतस्य नगरस्य जनाः किमर्थं पापकार्याणि आचरन्ति ? एतेषां मरणभीतिः एव न स्यात् वा ?' इति चिन्तयन् एकत्र स्थितवान् ।

''वत्स ! कुतः आगतं भवता ?'' इति प्रश्नः अनतिदूरात् एव श्रुतः यशोवर्धनेन । एतस्मात् आश्चर्यचकितः सः परितः दृष्टवान् । पार्श्वे एव कश्चित् संन्यासी स्थितवान् आसीत् ।

''अहं मिथिलानगरात् आगतवान् अस्मि'' इति उक्तवान् यशोवर्धनः ।

''भवतः नगरे मृत्युः स्वकीयम् आगमनं पूर्वम् एव सूचयति किम् ? तत्रत्याः जनाः अकस्मात् मरणं न प्राप्नुवन्ति किम् ? जातस्य मरणं निश्चितम् इति जानन्तः अपि ते किं पापकार्याणि न आचरन्ति ?'' इति पृष्टवान् सः संन्यासी ।

एतत् श्रुतवति यशोवर्धने विवेकः उदितः । आत्मना आचरितानि सर्वाणि पापकार्याणि स्मृत्वा अतीव पश्चात्तापम् अनुभूतवान् सः संन्यासिनः पादयोः पतित्वा प्रार्थितवान् - ''स्वामिन् ! अहं पापी अस्मि । मरणात् आत्मानं रक्षितुम् इच्छन् अहम् एतत् नगरं प्रति आगतवान् । इदानीं मया ज्ञातं यत् आत्मनः रक्षणं मरणात् न, अपि तु पापकार्यात् इति । कृपया भवान् मां धर्ममार्गम् उपदिशतु'' इति ।

संन्यासी यशोवर्धनं धर्ममार्गम् उपदिष्टवान् ।



# अपघातः अभवत्

| | | |
|---|---|---|
| मालती - | किमर्थम् एतावान् विलम्बः अद्य ? कार्यालये मित्रैः सह जल्पनं कुर्वन् उपविष्टवान् वा भवान् ? गृहे पत्नी प्रतीक्षमाणा भवति इति चिन्तनम् एव नास्ति खलु भवतः ! | Why so late ? Spent time speaking to friends in the office ? You don't to have a though for the wife waiting at home ? |
| रमेशः - | नैव भोः ! कार्यालयतः पञ्चवादने एव प्रस्थितवान् अहम्, मध्येमार्गम् अपघातः अभवत् । | No, I left the office at 5 O'clock, but met with an accident on the way. |
| मा - | अपघातः ! कथम् अभवत् ? भवान् न व्रणितः खलु ! | Accicent ! How did it happen ? You are not wounded, are you ? |
| र - | काचित् वृद्धा अकस्मात् पुरतः आगतवती । तां रक्षितुम् उद्युक्तः । तथापि सा किञ्चिदिव व्रणिता । | An old woman suddenly came opposite. I tried to save her, but she was all the same wounded slightly. |
| मा - | अनन्तरम् ? | Then ? |
| र - | अनन्तरं मम स्कूटर्यानं तत्रैव मार्गपार्श्वे संस्थाप्य, तां वृद्धां चिकित्सालयं नीत्वा चिकित्सां कारयित्वा तां तस्याः गृहं प्रापय्य आगतवान् । अतः एतावान् विलम्बः जातः । | I parked my scooter on the roadside, took the woman to a clinic, got her treated and dropped her in her house. That is how I was delayed. |
| मा - | देवो दयालुः । एतावता भवान् अतीव श्रान्तः स्यात् । हस्तौ पादौ च प्रक्षाल्य आगच्छतु भवान् । उपाहारं दास्यामि । | God is merciful. You must be very tired. Wash your hands and feet and come. Let me give you something to eat. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अपत्यम् - | Progeny | ध्वस्ताः - | Were destroyed |
| अर्गलम् - | Bolt | निदर्शनम् - | Example |
| अलसः - | Lazy | निराहारा - | Without food |
| अवलेहः - | Pickle | पितृव्यः - | Uncle |
| आजीवनम् - | Lifelong | पृथक् - | Separately |
| आमर्शनम् - | Caressing | मातुलः - | Maternal Uncle |
| ईर्ष्या - | Jealousy | यमलौ - | Twins |
| उत्प्लुत्य - | Having jumped | युतकम् - | Shirt |
| उपनेत्रम् - | Spectacles | रोम - | Hair |
| कण्डोलः - | Basket | लवित्रम् - | Sword |
| कीलयित्वा - | Having locked | लाक्षा - | Lac |
| कुक्कुटः - | Cock | वटवृक्षः - | Banian Tree |
| क्षुधा - | Hunger | वल्मीकः - | Ant-hill |
| खातम् - | Valley | वारं वारम् - | Again and again |
| घोरिका - | Snore | वितर्दिः - | Verandah |
| जम्बीरम् - | Lemon | शीतलारोगः - | Smallpox |
| जामाता - | Son-in-law | श्यालः - | Wife's brother |
| तरङ्गः - | Wave | सम्मार्जनी - | Broomstick |
| त्वक् - | Skin | सर्षपः - | Mustard |
| धूलिः - | Dust | सीमा - | Boundary |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां डिसेम्बर् - १९९५ मासे प्रकटयिष्यामः ।


Bhanu


Tajy Prasad

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

---

### 'अगस्ट्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - रञ्जयामो मनो ललितचलनेन वयम् ।

द्वितीयचित्रम् - साधयामो वयम् अचलेन मनसा जयम् ।

प्रेषकः - एस्. कोदण्डरामः, प्राच्यविद्याशाला, पश्चिममुख्यमार्गः, तञ्जावूरु - ६१३००९ (त.ना.)

---


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) - रू. ६०.००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

THE MOST ENDEARING GIFT YOU CAN THINK OF
FOR YOUR NEAR AND DEAR WHO IS FAR AWAY

# CHANDAMAMA



**Give him the magazine in the language of his choice—**
Assamese, Bengali, English, Gujarati, Hindi, Kannada, Malayalam, Marathi, Oriya, Sanskrit, Tamil or Telugu
**—and let him enjoy the warmth of home away from home.**

**Subscription Rates (Yearly)**

**AUSTRALIA, JAPAN, MALAYSIA & SRI LANKA**

By Sea mail Rs.**117.00** By Air mail Rs. **264.00**

**FRANCE, SINGAPORE, U.K., U.S.A., WEST GERMANY & OTHER COUNTRIES**

By Sea mail Rs. **123.00** By Air mail Rs. **264.00**

**Send your remittance by Demand Draft or Money Order favouring 'Chandamama Publications' to:**

CIRCULATION MANAGER **CHANDAMAMA PUBLICATIONS** CHANDAMAMA BUILDINGS
VADAPALANI MADRAS 600 026

